सुपक्वं कदलीफलम्। शर्करा-घृत-दुग्धं च गोधूमस्य च चूर्णकम् ।।25।। कृत्वैकत्र सपादं च गृहीत्वा स्वगृहं ययौ। ततो बन्धून् समाहूय चकार विधिना व्रतम्।।26।। तद् व्रतस्य प्रभावेण धनपुत्रन्वितोऽभवत्। इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं ययौ।।27।।

इति श्री स्कन्दपुराणे रेवाखण्डे सूत शौनकसंवादे सत्यनारायण व्रतकथायां द्वितीयोऽध्यायः ।।2।।

## तृतीयोऽध्यायः

सूत उवाच-पुनरग्रे प्रवक्ष्यामि श्रृणुध्वं मुनिसत्तमाः। पुरा चोल्कामुखो नाम नृपश्चासीन्महामतिः।।1।। जितेन्द्रियः सत्यवादी ययौ देवालयं प्रति। दिने दिने धनं दत्त्वा द्विजान् सन्तोषयत् सुधीः।।2।। भार्या तस्य प्रमुग्धा च सरोजवदना सती। भद्रशीलानदीतीरे सत्यस्य व्रतमाचरत्।।3।। एतस्मिन् समये तत्र साधुरेकः समागतः। वाणिज्यार्थं बहुधनैरनेकैः परिपूरिताम् ।।4।। नावं संस्थाप्य तत्तीरे जगाम नृपतिं प्रति। दृष्ट्वा स व्रतिनं भूपं पप्रच्छ विनयान्वितः।।5।। साधुरुवाच-किमिदं कुरुषे राजन्! भक्तियुक्तेन चेतसा। प्रकाशं कुरु तत्सर्वं श्रोतुमिच्छामि साम्प्रतम्।।6।। राजोवाच-पूजनं क्रियते साधो! विष्णोरतुलतेजसः । व्रतं च स्वजनैः सार्धं पुत्राद्यावाप्तिकाम्यया।।7।। भूपस्य वचनं श्रुत्वा साधुः प्रोवाच सादरम्। सर्वं कथय में राजन्! करिष्येऽहं तवोदितम्।।8।। ममापि सन्ततिर्नास्ति ह्येतस्माज्जायते ध्रुवम्। ततो निवृत्य वाणिज्यात् सानन्दो गृहमागतः।।9।। भार्यायै कथितं सर्वं व्रतं सन्ततिदायकम्। तदा व्रतं करिष्यामि यदा में सन्ततिर्भवेत् ।।10।। इति लीलावती प्राह स्वपत्नीं साधुसत्तमः। एकस्मिन् दिवसे तस्य भार्या लीलावती सती।।11।। भर्तृयुक्ताऽऽनन्दचित्ताऽभवद्धर्मपरायणा। गर्भिणी साऽभवत्तस्य भार्या सत्यप्रसादतः ।।12।। दशमे मासि वै तस्याः कन्यारत्नमजायत। दिने दिने सा ववृधे शुक्लपक्षे यथा शशी।।13।। नाम्ना कलावती चेति तन्नामकरणं कृतम्। ततो लीलावती प्राह स्वामिनं मधुरं वचः।।14।। न करोषि किमर्थं वै पुरा सङ्कल्पितं व्रतम्। साधुरुवाच-विवाहसमये त्वस्याः करिष्यामि व्रतं प्रिये!।।15।। इति भार्यां समाश्वास्य जगाम नगरं प्रति। ततः कलावती कन्या वृधे पितृवेश्मनि।।16।। दृष्ट्वा कन्यां ततः साधुर्नगरे सखिभिः सह। मन्त्रयित्वा द्रुतं दूतं प्रेषयामास धर्मवित्।।17।। विवाहार्थं च कन्याया वरं श्रेष्ठ विचारय। तेनाऽऽज्ञप्तश्च दूतोऽसौ काञ्चनं नगरं ययौ ।।18।। तस्मादेकं वणिक्पुत्रं समादायाऽऽगतो हि सः। दृष्ट्वा तु सुन्दरं बालं वणिक्पुत्रं गुणान्वितम्।।19।। ज्ञातिभि-र्बन्धुभिः सार्धं परितुष्टेन चेतसा। दत्तवान् साधुपुत्राय कन्यां विधि-विधानतः ।।20।। ततो भाग्यवशात्तेन विस्मृतं व्रतमुत्तमम्। विवाहसमये

तस्यास्तेन रुष्टोऽभवत् प्रभुः ।।21।। ततः कालेन नियतो निजकर्मविशारदः। वाणिज्यार्थं ततः शीघ्रं जामातृसहितो वणिक्।।22।। रत्नसारपुरे रम्ये गत्वा सिन्धुसमीपतः। वाणिज्यमकरोत् साधुर्जामात्र श्रीमता सह।। 23।। तौ गतौ नगरे रम्ये चन्द्रकेतोर्नृपस्य च। एतस्मिन्नेव काले तु सत्यनारायणः प्रभुः ।।24।। भ्रष्टप्रतिज्ञमा-लोक्य शापं तस्मै प्रदत्तवान्। दारुणं कठिनं चास्य महद्दुःखं भविष्यिति।।25।। एकस्मिन् दिवसे राज्ञो धनमादाय तस्करः। तत्रैव चागतश्चौरौ वणिजौ यत्र संस्थितौ।।26।। तत्पश्चाद् धावकान् दूतान् दृष्ट्वा भीतेन चेतसा। धनं संस्थाप्य तत्रैव स तु शिघ्रमलक्षितः।।27।। ततो दूताः समायाता यत्रास्ते सज्जनो वणिक्। दृष्ट्वा नृपधनं तत्र बद्ध्वाऽ ऽनीतौ वणिक्सुतौ।।28।। हर्षेण धावमानाश्च ऊचुर्नृपसमीपतः। तस्करौ द्वौ समानीतौ विलोक्याऽऽज्ञापय प्रभो।।29।। राज्ञाऽऽज्ञप्तास्ततः शीघ्रं दृढं बद्ध्वा तु तावुभौ। स्थापितौ द्वौ महादुर्गे कारागारेऽविचारतः।।30।। मायया सत्यदेवस्य न श्रुतं कैस्तयोर्वचः। अतस्तयोर्धनं राज्ञा गृहीतं चन्द्रकेतुना।।31।। तच्छापाच्च तयोर्गेहे भार्या चैवातिदुःखिता। चौरेणापहृतं सर्वं गृहे यच्च स्थितं धनम्।।32।। आधिव्याधिसमायुक्ता क्षुत्पिपसातिदुःखिता। अन्नचिन्तापरा भूत्वा बभ्राम च गृहे गृहे।।33।। कलावती तु कन्यापि बभ्राम प्रतिवासरम्। एकस्मिन् दिवसे जाता क्षुधार्ता द्विजमन्दिरम् ।।34।। गत्वाऽपश्यद् व्रतं तत्र सत्यनारायणस्य च। उपविश्य कथां श्रुत्वा वरं सम्प्रार्थ्य वाञ्छितम्।।35।। प्रसादभक्षणं कृत्वा ययौ रात्रौ गृहं प्रति। माता लीलावती कन्यां कथयामास प्रेमतः।।36।। पुत्रि रात्रौ स्थिता कुत्र किं ते मनसि वर्तते। कन्या कलावती प्राह मातरं प्रति सत्वरम्।।37।। द्विजालये व्रतं मातर्दृष्टं वाञ्छितसिद्धिदम्। तच्छ्रुत्वा कन्यका वाक्यं व्रतं कर्तु समुद्यता।।38।। सा तदा तु वणिग्भार्या सत्यनारायणस्य च। व्रतं चक्रे सैव साध्वी बन्धुभिः स्वजनैः सह।।39।। भर्तृ-जामातरौ क्षिप्रमागच्छेतां स्वमाश्रमम्। इति दिव्यं वरं बव्रे सत्यदेवं पुनः पुनः।।40।। अपराधं च मे भर्तुर्जामातुः क्षन्तुमर्हसि। व्रतेनानेन तुष्टोऽसौ सत्यनारायणः पुनः।।41।। दर्शयामास स्वप्नं हि चन्द्रकेतुं नृपोत्तमम्। वन्दिनौ मोचय प्रातर्वणिजौ नृपसत्तम!।।42।। देयं धनं च तत्सर्वं गृहीतं यत्त्वयाऽधुना। नो चेत् त्वां नाशयिष्यामि सराज्यं-धन-पुत्रकम्।।43।। एवमाभाष्य राजानं ध्यानगम्योऽभवत् प्रभुः। ततः प्रभातसमये राजा च स्वजनैः सह।।44।। उपविश्य सभामध्ये प्राह स्वप्नं जनं प्रति।। बद्धौ महाजनौ शीघ्रं मोचय द्वौ वणिक्सुतौ।।45।। इति राज्ञो वचः श्रुत्वा मोचयित्वा महाजनौ। समानीय नृपस्याऽग्रे प्राहुस्ते विनयान्विताः।।46।। आनीतौ द्वौ वणिक्पुत्रै मुक्त्वा निगडबन्धनात्। ततो

महाजनौ नत्वा चन्द्रकेतुं नृपोत्तमम्।।47।। स्मरन्तौ पूर्ववृत्तान्तं नोचतुर्भयविह्वलौ। राजा वणिक्सुतौ वीक्ष्य वचः प्रोवाच सादरम्।।48।। दैवात् प्राप्तं महद्दुःखमिदानीं नास्ति वै भयम्। तदा निगडसन्त्यागं क्षौरकर्माऽद्यकारयत्।।49।। वस्त्रालङ्कारकं दत्त्वा परितोष्य नृपश्च तौ। पुरस्कृत्य वणिक्पुत्रौ वचसाऽतोायद् भृशम्।।50।। पुराऽऽनीतं तु यद् द्रव्यं द्विगुणीकृत्य दत्तवान्। प्रोवाच तौ ततो राजा गच्छ साधो! निजाश्रमम्।।51।। राजानं प्रणिपत्याऽऽह गन्तव्यं त्वत्प्रसादतः। इत्युक्त्वा तौ महावैश्यौ जग्मतुः स्वगृहं प्रति।।52।।

इति श्री स्कन्दपुराणे रेवाखण्डे सूतशौनकसंवादे सत्यनारायणव्रतकथायां तृतीयोध्यायः।

## चतुर्थोध्यायः

सूत उवाच-यात्रां तु कृतवान् साधुर्मङ्गलायनपूर्विकाम्। ब्राह्मणेभ्यो धनं दत्त्वा तदा तु नगरं ययौ।।1।। कियद् दूरे गते साधौ सत्यनारायणः प्रभुः। जिज्ञासां कृतवान् साधो! किमस्ति तव नौ स्थितम्।।2।। ततो महाजनौ मत्तौ हेलया च प्रहस्य वै। कथं पृच्छसि भो दण्डिन्! मुद्रां नेतुं किमिच्छसि।।3।। लता-पत्रदिकं चैव वर्तते तरणौ मम। निष्ठुरं च वचः श्रुत्वा सत्यं भवतु ते वचः।।4।। एवमुक्त्वा गतः शीघ्रं दण्डी तस्य समीपतः। कियद्दूरे ततो गत्वा स्थितः सिन्धुसमीपतः।।5।। गते दण्डिनि साधुश्च कृतनित्यक्रियस्तदा। उत्थितां तरणीं दृष्ट्वा विस्मयं परमं ययौ ।।6।। दृष्ट्वा लतादिकं चैव मूर्च्छितो न्यपतद् भुवि। लब्धसंज्ञो वणिक् पुत्रस्ततश्चिन्ताऽन्वितोऽभवत्।।7।। तदा तु दुहितुः कान्तो वचनं चेदमब्रवीत्।। किमर्थं क्रियते शोकः शापो दत्तश्च दण्डिना।।8।। शक्यतेऽनेन सर्वं हि कर्तुं चात्र न संशयः। अतस्तच्छरणं याहि वाञ्छितार्थो भविष्यति ।।9।। जामातुर्वचनं श्रुत्वा तत्सकाशं गतस्तदा।। दृष्ट्वा च दण्डिनं भक्त्या नत्वा प्रोवाच सादरम्।।10।। क्षमस्व चापराधं मे यदुक्तं तव सन्निधौ।। एवं पुनः पुनर्नत्वा महाशोकाऽऽकुलोऽभवत्।।11।। प्रोवाच वचनं दण्डी विलपन्तं विलोक्य च। मारोदीः श्रृणु मद्वाक्यं मम पूजाबहिर्मुखः।।12।। ममाऽऽज्ञया च दुर्बुद्धे! लब्धं दुःखं मुहुर्मुहुः। तच्छ्रुत्वा भगवद् वाक्यं व्रतं कर्तुं समुद्यतः।।13।। साधुरुवाच-त्वन्मायामोहिताः सर्वे ब्रह्माद्यास्त्रिदिवौकसः। न जानन्ति गुणान् रूपं तवाऽऽश्चर्यमिदं प्रभो।।14।। मूढोऽहं त्वां कथं जाने मोहितस्तव मायया। प्रसीद पूजमिष्यामि यथाविभवविस्तरैः।।15।। पुरा वित्तैश्च तत्सर्वैः पाहि मां शरणागतम्। श्रुत्वा भक्तियुतं वाक्यं परितुष्टो जनार्दनः।।16।। वरं च वाञ्छितं दत्त्वा तत्रैवाऽन्तर्दधे हरिः। ततो नौकां समारुह्य दृष्ट्वा वित्तप्रपूरिताम्।।17।। कृपया सत्यदेवस्य

सफलं वाञ्छितं मम। इत्युक्त्वा स्वजनैः सार्द्धं पूजां कृत्वा यथाविधि।।18।। हर्षेण चाऽभवत्पूर्णः सत्यदेवप्रसादतः। नावं संयोज्य यत्नेन स्वदेशगमनं कृतम्।। 19।। साधुर्जामातरं प्राह पश्य रत्नपुरीं मम। दूतं च प्रेषयामास निजवित्तस्य रक्षकम्।।20।। दूतोऽसौ नगरं गत्वा साधुभार्यां विलोक्य च। प्रोवाच वाञ्छितं वाक्यं नत्वा बद्धाञ्जलिस्तदा।।21।। निकटे नगरस्यैव जामात्रा सहितो वणिक्। आगतो बन्धुवर्गैश्च वित्तैश्च बहुभिर्युतः ।।22।। श्रुत्वा दूतमुखाद् वाक्यं महाहर्षवती सती। सत्यपूजां ततः कृत्वा प्रोवाच तनुजां प्रति।।23।। ब्रजामि शीघ्रमागच्छ साधुसन्दर्शनाय च। इति मातृवचः श्रुत्वा व्रतं कृत्वा समासतः ।।24।। प्रसादं च परित्यज्य गता साऽपि पतिं प्रति। तेन रुष्टः सत्यदेवो भर्तारं तरणीं तथा।।25।। संहृत्य च धनैः सार्धं जले तस्मिन्नमज्जयत्। ततः कलावती कन्या न विलोक्य निजं पतिम्।।26।। शोकेन महता तत्र रुदती चाऽपतद् भुवि। दृष्ट्वा तथाविधां नौकां कन्यां च बहुदुःखिताम् ।।27।। भीतेन मनसा साधुः किमाश्चर्यमिदं भवेत् चिन्त्यमानाश्च ते सर्वे बभूवुस्तरिवाहकाः।।28।। ततो लीलावती कन्या दृष्ट्वा सा विह्वलाऽभवत्। विललापऽतिदुः खेन भर्तारं चेदमब्रतीत्।।29।। इदानीं नौकया सार्धं कथं सोऽभूदलक्षितः। न जाने कस्य देवस्य हेलया चैव सा हृता।।30।। सत्यदेवस्य माहात्म्यं ज्ञातुं वा केन शक्यते। इत्युक्त्वा विलालपैवं ततश्च स्वजनैः सह।।31।। ततौ लीलावती कन्या क्रोडे कृत्वा रुरोद ह। ततः कलावती कन्या नष्टे स्वामिनि दुःखिता।।32।। गृहीत्वा पादुकां तस्याऽनुगन्तुं च मनोदधे। कन्यायाश्चरितं दृष्ट्वा सभार्यः सज्जनो वणिक्।।33।। अतिशोकेन सन्तप्तश्चिन्तयामास धर्मवित्। हृतं वा सत्यदेवेन भ्रान्तोऽहं सत्यमायया।।34।। सत्यपूजां करिष्यामि यथाविभवविस्तरम्। इति सर्वान् समाहूय कथयित्वा मनोरथम्।।35।। नत्वा च दण्डवद् भूमौ सत्यदेवं पुनः पुनः। ततस्तुष्टः सत्यदेवो दीनानां परिपालकः।।36।। जगाद वचनं चैनं कृपया भक्तवत्सलः। त्यक्त्वा प्रसादं ते कन्या पतिं द्रष्टुं समागता।।37।। अतोऽदृष्टोभवत्तस्याः कन्यकायाः पतिर्ध्रुवम्। गृहं गत्वा प्रसादं च भुक्त्वा साऽऽयाति चेत्पुनः ।।38।। लब्धभर्त्री सुता साधो! भविष्यति न संशयः। कन्यका तादृषं वाक्यं श्रुत्वा गगनमण्डलात्।।39।। क्षिप्रं तदा गृहं गत्वा प्रसादं च बुभोज सा। तत् पश्चात्पुनरागत्य सा ददर्श निजं पतिम्।।40।। ततः कलावती कन्या जगाद पितरं प्रति। इदानीं च गृहं याहि विलम्बं कुरुषे कथम्।।41।। तच्छ्रुत्वा कन्यकावाक्यं सन्तुष्टोऽभूद वणिक्सुतः। पूजनं सत्यदेवस्य कृत्वा विधिविधानतः।।42।। धनैर्बन्धुगणैः सार्धं जगाम निजमन्दिरम्।। पौर्णमास्यां

च सङ्क्रान्तौ कृतवान् सत्यपूजनम्।।43।। इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं ययौ।।44।।

इति श्री सकन्दपुराणे रेवाखण्डे सूतशौनकसंवादे सत्यनारायणव्रतकथायां चतुर्थोऽध्याय:।।4।।

## पञ्चमोध्याय:

सूत उवाच-अथान्यच्च प्रवक्ष्यामि श्रृणध्वं मुनिसत्तमा:।। आसीत् तुङ्ग-ध्वजो राजा प्रजापालनतत्पर:।।1।। प्रसादं सत्यदेवस्य त्यक्त्वा दु:खमवाप स:। एकदा स वनं गत्वा हत्वा बहुविधान् पशून्।।2।। आगत्य वटमूलं च दृष्ट्वा सत्यस्य पूजनम्। गोपा: कुर्वन्ति सन्तुष्टा भक्तियुक्ता: सबन्धवा:।।3।। राजा दृष्ट्वा तु दर्पेणा न गतो न ननाम स:। ततो गोपगणा: सर्वे प्रसादं नृपसन्निधौ ।।4।। संस्थाप्य पुनरागत्य भुक्त्वा सर्वे यथेप्सितम्। तत: प्रसादं संत्यज्य राजा दु:खमवाप स:।।5।। तस्य पुत्रशतं नष्टं धनधान्यादिकं च यत्। सत्यदेवेन तत्सर्वं नाशितं मम निश्चितम्।।6।। अतस्तत्रैव गच्छामि यत्र देवस्य पूजनन्। मनसा तु विनिश्चित्य ययौ गोपालसन्निधौ।।7।। ततोऽसौ सत्यदेवस्य पूजां गोपगणै: सह। भक्तिश्रद्धान्वितो भूत्वा चकार विधिना नृप:।।8।। सत्यदेवप्रसादेन धनपुत्राऽन्वितोऽभवत्। इह लोके सुखं भुक्त्वा पश्चात् सत्यपुरं ययौ।।9।। य इदं कुरुते सत्यव्रतं परम दुर्लभम्। श्रृष्णोति च कथां पुण्यां भक्तियुक्तां फलप्रदाम्।।10।। धनधान्यादिकं तस्य भवेत् सत्यप्रसादत:। दरिद्रो लभते वित्तं बद्धो मुच्येत बन्धनात्।।11।। भीतो भयात् प्रमुच्येत सत्यमेव न संशय:। ईप्सितं च फलं भुक्त्वा चान्ते सत्यपुरं ब्रजेत्।।12।। इति व: कथितं विप्रा: सत्यनारायणव्रतम्। यत्कृत्वा सर्वदु:खेभ्यो मुक्तो भवति मानव:।।13।। विशेषत: कलियुगे सत्यपूजा फलप्रदा। केचित्कालं वदिष्यन्ति सत्यमीशं तमेव च।।14।। सत्यनारायणं केचित् सत्यदेवं तथापरे। नाना रूपधरो भूत्वा सर्वेषामीप्सितप्रद:।।15।। भविष्यति कलौ सत्यव्रतरूपी सनातन:। श्रीविष्णुना धृतं रूपं सर्वेषामीप्सितप्रदम्।।16।। श्रृणोति य इमां नित्यं कथा परमदुर्लभाम्। तस्य नश्यन्ति पापानि सत्यदेव प्रसादत:।।17।। व्रतं यैस्तु कृतं पूर्वं सत्यनारायणस्य च। तेषां त्वपरजन्मानि कथयामि मुनीश्वरा:।।19।। शतानन्दो महा-प्राज्ञ: सुदामा ब्राह्मणोऽभवत्। तस्मिन् जन्मनि श्रीकृष्णं ध्यात्वा मोक्षमवाप ह।।19।। काष्ठभारवहो भिल्लो गुहराजो बभूव ह। तस्मिन् जन्मनि श्रीरामसेवया मोक्षमाप्तवान्।।20।। उल्कामुखो महाराजो नृपो दशरथो-ऽभवत्। श्रीरङ्नाथं सम्पूज्य श्रीवैकुण्ठं तदाऽगमत्।।21।। धार्मिक: सत्यसन्धश्च साधुर्मोरध्वजोऽभवत्। देहार्धं क्रकचैश्छित्वा दत्त्वा

**मोक्षमवाप ह।।22।। तुङ्गध्वजो महाराजः स्वायम्भुरभवत् किल। सर्वान् भागवतान् कृत्वा श्रीवैकुण्ठं तदाऽगमत्।।23।।**

इति श्री स्कन्दपुराणे रेवाखण्डे सूतशौनकसंवादे। सत्यनारायणव्रतकथायां पञ्चमोऽध्यायः।। 5।।

# श्रीमद्भागवत पूजन विधि

प्रातः काल स्नान के पश्चात् अपना नित्य-नियम समाप्त करके पहले भगवत्सम्बन्धी स्तोत्रों एवं पदों के द्वारा मङ्गलाचरण और वन्दना करे। इसके बाद आचमन और प्राणायाम करके-

**ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः।।**

इत्यादि मन्त्रों से शान्तिपाठ करे। इसके पश्चात् भगवान् श्रीकृष्ण, श्रीव्यासजी, शुकदेवजी तथा श्रीमद्भागवत-ग्रन्थ की षोडशोपचार से पूजा करनी चाहिये। यहाँ श्रीमद्भागवत पुस्तक के षोडशोपचार पूजन की मन्त्र सहित विधि दी जा रही है। इसी के अनुसार श्रीकृष्ण आदि की भी पूजा करनी चाहिये। निम्नाङ्कित वाक्य पढ़कर पूजन के लिये संकल्प करना चाहिये। संकल्प के समय दाहिने हाथ की अनामिका-अङ्गुलि में पवित्री पहने और हाथ में जल लिये रहे। संकल्पवाक्य इस प्रकार है-

**ॐ तत्सत्। ॐ विष्णुर्विष्णुर्विष्णुः.......... अमुकगोत्रोत्पन्नस्य अमुकशर्मणः (वर्मणः गुप्तस्य वा) मम सकुटुम्बस्य सपरिवारस्य श्रीगोवर्धनधरण-चरणारविन्दप्रसादात् सर्वसमृद्धिप्राप्त्यर्थं भगवदनुग्रहपूर्वक-भगवदीयप्रेमोपलब्धये च श्रीभगवन्नामात्मकभगवत्स्वरूपश्रीभागवतस्य पाठेऽधिकारसिद्ध्यर्थं श्रीमद्भागवतस्य प्रतिष्ठां पूजनं चाहं करिष्ये।**

इस प्रकार संकल्प करके-

**तदस्तु मित्रावरुणा तदग्ने शंयोऽस्मभ्यमिदमस्तु शस्तम्।**
**अशीमहि गाधमुत प्रतिष्ठां नमो दिवे वृहते सादनाय।।**

यह मंत्र पढ़कर श्रीमद्भागवत की सिंहासन या अन्य किसी आसन पर स्थापना करे। तत्पश्चात् पुरुषसूक्त के एक-एक मन्त्रद्वारा क्रमशः षोडश उपचार अर्पण करते हुए पूजन करे।

आवाहन-**ॐ सहस्रशीर्षा० श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। आवाहयामि।**

इस मंत्र से भगवान् के नामस्वरूप श्रीमद्भागवत को नमस्कार करके आवाहन करे।

आसन-**ॐ पुरुष एवेदं0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। आसनं समर्पयामि।** इस मन्त्र से आसन समर्पण करे।

पाद्य-**ॐ एतावानस्य0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। पाद्यं समर्पयामि।** इस मंत्र से पाद्य समर्पित करे।

अर्घ्य-**ॐ त्रिपादूर्ध्व0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। अर्घ्यं समर्पयामि।** इस मन्त्र से पैर पखारने के लिये जल समर्पण करे।

आचमन-**ॐ ततो विराडजायत0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। आचमनीयं समर्पयामि।** इस मन्त्र से आचमन के लिये जल या गङ्गाजल अर्पण करे।

स्नान-**ॐ तस्माद्यज्ञात् सर्वहुतः सम्भृतं0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। स्नानीयं समर्पयामि।** इस मन्त्र से स्नान के लिये जल अर्पण करे।

वस्त्र-**ॐ यत्पुरुषेण0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। वस्त्रं समर्पयामि।** इस मन्त्र से वस्त्र समर्पण करे।

यज्ञोपवीत-**ॐ तं यज्ञं0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। यज्ञोपवीतं समर्पयामि।** इस मन्त्र से यज्ञोपवीत अर्पण करे।

चन्दन-**ॐ तस्माद्यज्ञात्सर्वहुतः0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। चन्दनं समर्पयामि।** इस मन्त्र से चन्दन चढ़ाये।

पुष्प-**ॐ तस्माद्यज्ञात्सर्वहुत ऋचः0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। पुष्पं समर्पयामि।** इस मंत्र से फूल चढ़ाये।

धूप-**ॐ यत्पुरुषं0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। धूपमाघ्रापयामि।** इस मन्त्र से धूप सुँघाये।

दीप-**ॐ चन्द्रमा0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः दीपं दर्शयामि।** इस मन्त्र से घीका दीप जलाकर दिखाये और उसके बाद हाथ धो ले।

नैवेद्य-**ॐ नाभ्या0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। नैवैद्यं निवेदयामि।** इस मन्त्र से नैवेद्य अर्पण करे।

**श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः।**
**एलालवङ्गपूगीफलकर्पूरसहितं ताम्बूलं समर्पयामि।**

ताम्बूल-**ॐ सप्तास्यासन्, 0** इस मन्त्र से पानका बीड़ा अर्पण करे।

**श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः।**

दक्षिणा-**हिरण्यगर्भः0 दक्षिणां समर्पयामि।**

प्रदक्षिणा-**धाता पुरस्ताद्यमुदाजहार शक्रः**
**प्रविताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्त्रः।**
**तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते।।**

**श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः।**

**प्रदक्षिणां समर्पयामि।** इस मन्त्र से प्रदक्षिणा करे।

मंत्र पुष्पाञ्जलि-**ॐ यज्ञेन0 श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः। मन्त्रपुष्पं समर्पयामि।** इस मन्त्र से मन्त्रपाठपूर्वक पुष्पाञ्जलि अर्पण करे।

प्रार्थना- **वन्दे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदान्तवेद्यं**
**लोके भक्तिप्रसिद्धं यदुकुलजलधौ प्रादुरासीदपारे।**
**यस्यासीद् रूपमेवं त्रिभुवनतरणे भक्तिवच्च स्वतन्त्रं**
**शास्त्रं रूपं च लोके प्रकटयति मुदा यः स नो भूतिहेतुः।।**
**श्रीभागवतरूपं तत् पूजयेद् भक्तिपूर्वकम्।**
**अर्चकायाखिलान् कामान् प्रयच्छति न संशयः।।**

विनियोग-दाहिने हाथ की अनामिका में कुश की पवित्री पहन ले। फिर हाथ में जल लेकर नीचे लिखे वाक्य को पढ़कर भूमिपर गिरा दे-

**ॐ अस्य श्रीमद्भागवताख्यस्तोत्रमन्त्रस्य नारद ऋषिः। बृहती छन्दः। श्रीकृष्णः परमात्मा देवता। ब्रह्म बीजम्। भक्तिः शक्तिः। ज्ञानवैराग्ये कीलकम्। मम श्रीमद्भगवत्प्रसादसिद्ध्यर्थे पाठे विनियोगः।**

न्यास-विनियोग में आये हुए ऋषि आदि का तथा प्रधान देवता के मन्त्राक्षरों का अपने शरीर के विभिन्न अङ्गों में जो स्थापन किया जाता है, उसे 'न्यास' कहते हैं। मन्त्र का एक-एक अक्षर चिन्मय होता है, उसे मूर्तिमान् देवता के रूप में देखना चाहिये। इन अक्षरों के स्थापन से साधक स्वयं मन्त्रमय हो जाता है, उसके हृदय में दिव्य चेतना का प्रकाश फैलता है, मन्त्र के देवता उसके स्वरूप होकर उसकी सर्वथा रक्षा करते हैं। ऋषि आदिका न्यास सिर आदि कतिपय अङ्गों में होता है मन्त्र पदों अथवा अक्षरों का न्यास प्रायः हाथ की अँगुलियों और हृदयादि अङ्गों में होता है। इन्हें क्रमशः'करन्यास' और 'अङ्गन्यास' कहते हैं। किन्हीं-किन्हीं मन्त्रों का न्यास सर्वाङ्गमें होता है। न्यास से बाहर-भीतर की शुद्धि, दिव्य बलकी प्राप्ति और साधना की निर्विघ्न पूर्ति होती है। यहाँ क्रमशः ऋष्यादिन्यास, करन्यास और अङ्गन्यास दिये जा रहे हैं-

ऋष्यादिन्यास-**नारदर्षये नमः शिरसि।।1।। बृहतीच्छन्दसे नमो मुखे।।2।। श्रीकृष्णपरमात्मदेवतायै नमोहृदये।।3।। ब्रह्मबीजाय नमो गुह्ये।।4।। भक्तिशक्तये नमः पादयोः।।5।। ज्ञानवैराग्यकीलकाभ्यां नमो नाभौ।।6।। विनियोगाय नमः सर्वाङ्गे।।7।।**

पहला वाक्य पढ़कर दाहिने हाथ की अङ्गुलियों से सिरका स्पर्श करे, दूसरा वाक्य पढ़कर मुखका, तीसरे वाक्य से हृदयका, चौथे से गुदाका, पाँचवें से पैरों का, छठे से नासिका और सातवें वाक्य से सम्पूर्ण अङ्गोका स्पर्श करना चाहिये।

करन्यास-इसमें **'ॐ नमो भगवते वासुदेवाय'** इस द्वादशाक्षर मन्त्र के एक-एक अक्षर प्रणव से सम्पुटित करके दोनों हाथों की अङ्गुलियों में स्थापित करना है। मन्त्र नीचे दिये जा रहे हैं-**'ॐ ॐ ॐ नमो दक्षिणतर्जन्याम्'** ऐसा उच्चारण करके दाहिने हाथ के अँगूठे से दाहिने हाथ की तर्जनी का स्पर्श करे। **ॐ नं ॐ नमो दक्षिणमध्यमायाम्**-यह उच्चारण कर दाहिने हाथ के अँगूठे से दाहिने हाथ की मध्यमा अङ्गुलिका स्पर्श करे। **ॐ मों ॐ नमो दक्षिणानामिकायाम्**-यह पढ़कर दाहिने हाथ के अँगूठे से दाहिने हाथ की अनामिका अङ्गुलिका स्पर्श करे। **ॐ भं ॐ नमो दक्षिणकनिष्ठिकायाम्**-इससे दाहिने हाथ के अँगूठे से दाहिने हाथ की कनिष्ठिका अङ्गुलिका स्पर्श करें। **ॐ गं ॐ नमो वामकनिष्ठिकायाम्**-इससे बायें हाथ के अँगूठे बायें हाथ की कनिष्ठिका अङ्गुलिका स्पर्श करे। **ॐ यं ॐ नमो वामानामिकायाम्**-इससे बायें हाथ के अँगूठे से बाये हाथ की अनामिका अङ्गुलिका स्पर्श करे। **ॐ तें ॐ नमो वाममध्यमायाम्**-इस से बायें हाथ के अँगूठे से बायें हाथ की मध्यमा अङ्गुलिका स्पर्श करे। **ॐ वां ॐ नमो वामतर्जन्याम्**-इससे बायें हाथ के अँगूठे से बायें हाथ की तर्जनी अङ्गुलिका स्पर्श करे। **ॐ सुं ॐ नमः ॐ दें ॐ नमो दक्षिणाङ्गुष्ठपर्वणोः**-इसको पढ़कर दाहिने हाथ की तर्जनी अङ्गुलि से दाहिने हाथ के अँगूठे की दोनों गाँठों का स्पर्श करे। **ॐ वां ॐ नमः ॐ यं ॐ नमो वामाङ्गुष्ठपर्वणोः**-इसका उच्चारण करके बायें हाथ की तर्जनी अङ्गुलिसे बायें हाथ के अँगूठे की दोनों गाँठों का स्पर्श करे।

अङ्गन्यास-यहाँ द्वादशाक्षर मन्त्र के पदों का हृदयादि अङ्गों में न्यास करना है-**ॐ नमो नमो हृदयाय नमः**-इसको पढ़कर दाहिने हाथ की पाँचों अङ्गुलियों से हृदय का स्पर्श करे। **ॐ भगवते नमः शिरसे स्वाहा**-इसका उच्चारण करके दाहिने हाथ की सभी अङ्गुलियों से सिरका स्पर्श करे। **ॐ वासुदेवाय नमः शिखायै वषट्**-इसके द्वारा दाहिने हाथ से शिखा कर स्पर्श करे। **ॐ नमो नमः कवचाय हुम्**-इसको पढ़कर दायें हाथ की अङ्गुलियों से बायें कंधे का और बायें हाथ की अङ्गुलियों से दायें

कंधे का स्पर्श करे। **ॐ भगवते नमः नेत्रत्रयाय वौषट्**-इसको पढ़कर दाहिने हाथ की अङ्गुलियों के अग्रभाग से दोनों नेत्रों तथा ललाट के मध्यभाग में गुप्तरूप से स्थित तृतीय नेत्र (ज्ञानचक्षु) का स्पर्श करे। **ॐ वासुदेवाय नमः अस्त्राय फट्**-इसका उच्चारण करके दाहिने हाथ को सिरके ऊपर से उलटा अर्थात् बायीं ओर से पीछे की ओर ले जाकर दाहिनी ओर से आगे की हथेली पर ताली बजाये। अङ्गन्यास में आये हुए 'स्वाहा', 'वषट्', 'हुम्', 'वौषट्' और 'फट्'-ये पाँच शब्द देवताओं के उद्देश्य से किये जाने वाले हवन से सम्बन्ध रखने वाले हैं। यहाँ इनका आत्मशुद्धि के लिये ही उच्चारण किया जाता है।

ध्यान-**किरीटकेयूरमहार्हनिष्कैर्मण्युत्तमालङ्कृतसर्वगात्रम्।**

**पीताम्बरं काञ्चनचित्रनद्धं मालाधरं केशवमभ्युपेमि।।**

# शिलान्यास

शिला स्थापन करने वाला यजमान निर्माणाधीन भूमि के आग्नेय दिशा में खोदे गये भूमि के पश्चिम की ओर बैठकर आचमन प्राणायाम आदि करे। तदनन्तर स्वस्ति वाचन आदि करते हुए संकल्प करे।

**देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्म्माऽहं करिष्यमाणस्यास्य वास्तोः शुभतासिद्ध्यर्थं निर्विघ्नता गृह-(प्रासाद)-सिद्ध्यर्थमायुरारोग्यैश्वर्य्याभिवृद्-ध्यर्थं च वास्तोस्तस्य भूमिपूजनं शिलान्यासञ्च करिष्ये तदङ्गभूतं श्रीगणपत्यादिपूजनञ्च करिष्ये।** गणेश, षोडशमातृका, नवग्रह आदि का पूजन करे। इसके बाद आचार्य **ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।।** इस मंत्र से पीली सरसों चारों ओर छींटकर पंचगव्य से भूमि को पवित्र कर वायुकोण में पांच शिलाओं को स्थापित करे। इसके बाद सर्पाकार वास्तु का आवाहन कर **ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽदमीवो भवा नः।। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।।** इस मंत्र से पूजा कर दही और भात का वलि दे पुनः नाग की पूजा करे **ॐ वासुकिं धृतराष्ट्रञ्च कर्कोटकधनञ्जयौ। तक्षकैरावतौ चैव कालेयमणिभद्रकौ।।** इससे आठों नागों के लिए पृथक्-पृथक् अथवा एक ही साथ नाम मंत्रों से आवाहन पूजन करें। पुनः धर्म रूप वृष का आवाहन पूजन कर हाथ जोड़कर प्रार्थना करें-

**ॐ धर्मोसि धर्मदैवत्यवृषरूप नमोस्तु ते।**

**सुखं देहि धनं देहि देहि पुत्रमनुत्तमम्।।**

गृहे गृहे निधिं देहि वृषरूप नमोस्तु ते।
आयुर्वृद्धिं च धान्यं च आरोग्यं देहि गेहयोः।।
आरोग्यं मम भार्याया पितृमातृसुखं सदा।
भ्रातृणां परमं सौख्यं पुत्राणां सौख्यमेव च।।
सर्वस्वं देहि मे विष्णो! गृहे संविशतां प्रभो!।
नवग्रहयुतां भूमिं पालयस्व वरप्रद!।।

पुनः पञ्चशिलाओं को-**ॐ आपः शुद्धा ब्रह्मरूपाः पावयन्ति जगत्त्रयम्। चाभिरद्भिः शिलां स्नाप्य स्थापयामि शुभे स्थले।** यह पढ़कर शुद्ध जल से धो दें। पुनः **ॐ गजाश्वरथ्यावल्मीकसद्भिर्मृद्भिः शिलेष्टकान् प्रक्षालयामि शुद्ध्यर्थं गृहनिर्माणकर्मणि।।** इसे पढ़कर सप्तमृतिका से प्रक्षालन करें। पुनः पञ्चगव्य, दही और तीर्थ के जल से धोकर शुद्ध वस्त्र से पोंछ दें और उन शिलाओं का कुंकुम चन्दन से लेपन कर स्वस्तिक चिह्न बनाकर वस्त्र से ढककर मन्त्र पढ़ें-**ॐ नन्दायै नमः (1) ॐ भद्रायै नमः (2) ॐ जयाये नमः (3) ॐ रिक्तायै नमः (4) ॐ पूर्णायै नमः (5)** उन शिलाओं के आगे इन पांचों कुम्भों (घड़ा) की स्थापना करे-**ॐ पद्माय नमः (1) ॐ महापद्मायनमः (2) ॐ शंखाय नमः (3) ॐ मकराय नमः (4) ॐ समुद्राय नमः (5)**

उसके बाद आचार्य गड्ढे की भूमि को लेपकर कछुआ के पीठ के ऊपर स्थित श्वेत वर्ण वाले चार भुजाओं में पद्म, शंख, चक्र और शूल धारण किये भूमि का ध्यान करे।

**कूर्माय नमः इति कूर्ममम् (1) ॐ अनन्ताय नमः इति अनन्तम् (2) ॐ वराहाय नमः इति वराहम् (3)** इस प्रकार आवाहन, पूजन कर दोनों घुटनों से पृथ्वी का स्पर्श कर जल, दूध, तिल, अक्षत जौ, सरसों और पुष्प अर्घ्य पात्र में रखकर भूमि के निमित्त मंत्र से अर्घ्य दें-**ॐ हिरण्यगर्भे वसुधे शेषस्योपरि शायिनि। उद्धृतासि वराहेण सशैलवनकानना।। प्रासादं (गृहं वा) कारयाम्यद्य त्वदूर्ध्वं शुभलक्षणम्।। गृहाणार्घ्यं मया दत्तं प्रसन्ना शुभदा भव।। भूम्यै नमः इदमर्घ्यं समर्पयामि।** पुनः आम्र या पलाश के पत्ते के ऊपर दीपक सहित घी और भात की बलि देकर प्रार्थना करे **ॐ समुद्रमेखले देवि पर्वतस्तनमण्डले। विष्णु-पत्नि नमस्तुभ्यं शस्त्रपातं क्षमस्व मे।। इष्टं मेत्वं प्रयच्छेष्टं त्वामहं शरणं गतः। पुत्रदारधनायुष्य-धर्मवृद्धिकरी भव।।** पुनः गड्ढे में तेल डालकर उसके ऊपर सफेद सरसों छोड़े।

मन्त्र-**ॐ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः। स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भूवं त्विमाम्।।** उसके ऊपर दही लिपटा

चावल उड़द की बलि देकर उसके ऊपर 7 पत्ते स्थापित कर एवं उसके ऊपर बारह अंगुलि लोहे की कील गाड़ दे। मन्त्र-**ॐ विशन्तु भूतले नागाः लोकपालाश्च सर्वतः। अस्मिन् स्थानेऽवतिष्ठन्तु आयुर्बलकराः सदा।।** उसके ऊपर मधु, घी, पारद, सुवर्ण (अथवा रुपया) ढके हुए मुख वाले ताम्र आदि से निर्मित पद्म नामक कुम्भ में पञ्चरत्न रख, चन्दन लगाकर वस्त्र लिपटाकर मध्य में रख दे तथा उस पर नारियल भी रख दे। इसी प्रकार पूर्व आदि दिशाओं में चार घड़ा स्थापित करे। पूर्वादि के क्रम से महापद्म 2, शंख 6, मकर 4, समुद्र 5, की पूजा कर कुम्भ के बराबर मिट्टी देकर अक्षत छोड़े। पुनः अच्छे मुहूर्त में सुपूजित 'पूर्णा' नामक ईंट स्थापित करे।

मन्त्र-**पूर्णे त्वं सर्वदा भद्रे! सर्वसन्दोहलक्षणे। सर्वं सम्पूर्णमेवात्र कुरुष्वाङ्गिरसः सुते।।** तदनन्तर पूर्व दिशा में-**ॐ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम्। अस्मिन् रक्षा त्वया कार्या प्रासाद यत्नतो मम।।** तदनन्तर दक्षिण दिशा में-**ॐ भद्रे! त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि। आयुर्दा कामदा देवि ! सुखदा च सदा भव।।** पश्चिम दिशा में-**ॐ जये ! त्वं सर्वदा देवि तिष्ठ त्वं स्थापिता मया। नित्यं जयाय भूत्यै च स्वामिनो! भव भार्गवि !।।** उत्तर दिशा में-**रिक्ते त्वरिक्तेदोषघ्ने सिद्धिवृद्धिप्रदे शुभे !। सर्वदा सर्वदोषघ्ने तिष्ठास्मिन्मम मन्दिरे।।** इस मंत्र से स्थापित कर पूर्णादि नाम मन्त्रों से गन्धादि द्वारा पूजा करें। पुनः चारों ओर दिक्पालों की पूजा कर दीपक के साथ दही, उड़द एवं भात की बलि दे। **विश्वकर्मणे नमः** इस प्रकार आयुध की पूजा कर प्रार्थना करे-**ॐ अज्ञानाज्ज्ञानतो वापि दोषाः स्युश्च यदुद्भवाः। नाशयन्त्वहितान्सर्वान् विश्वकर्मन्नमोऽस्तु ते।।** उसके बाद फावड़े की पूजा कर प्रार्थना करे-**ॐ त्वष्ट्रा त्वं निर्मितः पूर्वं लोकानां हितकाम्यया। पूजितोऽसि खनित्र ! त्वं सिद्धिदो भव नो ध्रुवम्।। वाष्पोष्पति, मृत्युञ्जय आदि देवताओं के जप हेतु प्रतिज्ञा संकल्प करे-**

**अद्येत्याद्युक्त्वा अनवधिवर्षावच्छिन्नबहुकालपर्यन्तं पुत्रकलत्रारोग्य-धनादिसमृद्धिप्राप्तिकामो गृहनिर्माणार्थकर्त्तव्यशिलास्थापनाङ्गत्वेन वास्तुदेवतामृत्युञ्जयादिप्रसादलाभाय यथासंख्यापरिमितं ब्राह्मणद्वारा जपमहं कारयिष्ये।**

वरण सामग्री लेकर-**अद्येत्यादि गृहनिर्माणार्थं कर्तव्यशिलास्थापनांगभूत-ब्राह्मणद्वारावास्तोष्पतिमृत्युंजयजपं कारयितुमेभिर्वरणद्रव्यैरमुकामुकगोत्रान् अमुकामुकशर्मणः ब्राह्मणान् जापकत्वेन युष्मानहं वृणे।** तदनन्तर मिष्ठान वितरण करे।

इति शिलान्यासविधिः

# गृहप्रतिष्ठा विधि

गोबर से लीये गये मण्डप के पश्चिम ओर यजमान भूमि पर बैठकर आचमन प्राणायाम देवताओं को नमस्कार कर संकल्प करे- **ॐ अद्येत्यादिज्ञाताज्ञात-कायवाङ्मनःकृतसकलपापक्षयपूर्वकशालाकर्माहं करिष्ये।** ब्राह्मण कहे-**कुरुष्व।** तदनन्तर गणेशादि की पूजा कर मंडप के ऊपर लाल रंग की एक ध्वजा स्थापित करे। उसके पूर्वादि दिशाओं में क्रमशः पीली, लाल, काली, नीली, सफेद धूंधली हरी, पंच रंगों वाली रक्त और सफेद पताका स्थापित करे। अनन्तर आचार्य वरण करे। तत्पश्चात् एक हाथ परिमित भूमि को कुशों से ढककर पहले पञ्चभूः संस्कार कर अग्निस्थापन पूर्वक ब्रह्मा का वरण करे। पुनः कुशकण्डिका कर प्रज्जवलित अग्नि में श्रुवा से हवन करे। **ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवो भवा नः यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा। इदं वास्तोष्पतये। ॐ वास्तोष्पते प्रतिरणोन एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्त्वे सखे स्वामपितेव पुत्रन्प्रति तन्नो जुषस्व स्वाहा। इदं वास्तोष्पतये। ॐ वास्तोष्पते शग्मयासं सवाते सक्षीमहिरण्वद्यागातु मत्वा। पाहि क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिः सदा नः स्वाहा। इदं वास्तोष्पतये। ॐ अमीवहा वास्तोष्पते विश्वारूपाण्याविश्च सखा सुशेवरग्धिनः स्वाहा। इदं वास्तोष्पतये। ॐ प्रजापतये स्वाहा। इदं प्रजापतये। इति मनसा। ॐइन्द्राय स्वाहा, इदमिन्द्राय। इत्याघारौ। ॐ अग्नये स्वाहा, इदमग्नये। ॐ सोमाय स्वाहा, इदं सोमाय। इत्याज्यभागौ। ॐ अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपधये। सरस्वतीं वाजीं च वास्तु मे दत्त वाजिनः स्वाहा। इदमग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वतीवायव्यै च। ॐ सर्प्प देवजनान्सर्वान्हिमवन्तꣳसुदर्शनम् बह्वश्च रुद्रानादित्यानीशानं जगदैः सह एतान् सर्वान् प्रपद्येऽहं वास्तु मे दत्तावाजिनः स्वाहा। इदं सर्वदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्यः आदित्येभ्य ईशानाय जगदेभ्यच। ॐ पूर्वाह्णं मपराह्णं चोभौ मध्यन्दिना सह प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथां एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्तवाजिनः स्वाहा। इदं पूर्वाह्णायापराह्णाय मध्यन्दिनाय प्रदोषायार्द्धरात्राय व्युष्टायै दैव्यै महापन्थायै च। ॐ कर्तारं च विकर्तारं विश्वकर्माणमौषधीश्च वनस्पती। एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा। इदं कर्त्रे विकर्त्रे, विश्वकर्म्मणे ओषधीभ्यो वनस्पतिभ्यश्च। ॐ धातारं च विधातारं निधीनाञ्च पतिं सह। एतान् सर्वान्प्रपद्येऽहं वास्तु दत्त्वाजिनः स्वाहा। इदं धात्रे विधात्रे निधीनां पतये च। ॐ स्योनꣳ शिवमिदं वास्तु मे दत्त ब्रह्मप्रजापती सर्वाश्च देवताः स्वाहा। इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च। ॐअग्नये**

**स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते। ॐ भूःस्वाहा इदमग्नये। ॐ भुवः स्वादा इदं वायवे। ॐ स्वः स्वाहा इदं सूर्याय।**

इसके बाद सर्व प्रायश्चित्त संज्ञक पञ्च वारुण होम 'चतुर्थ खण्ड के होम प्रकरण' से करायें।

**ॐ प्रजापतये स्वाहा इदं प्रजापतये। संस्त्रवप्राशनम् आचमनम् च। ब्रह्मणे पूर्णपात्रदानं ब्रह्मग्रन्थिविमोकः। ॐ सुमित्रिया न आप ओषधयः सन्तु इति पवित्राभ्यां जलमानीय तेन शिरः सम्मृज्य ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान् द्वेष्टि यञ्च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणम्। तत आस्तरणक्रमेण बर्हिरानीय घृतेनाभिघार्य हस्तेनैव जुहुयात्। तत्र मन्त्रः ॐ गातु विदो गातु वित्वा गातुमितमनसस्पत। इमं देवयज्ञ ᳪ स्वाहा व्वातेधाः स्वाहा। इति वर्हिर्होमः।**

वास्तुपूजन-संकल्प-**ॐ अद्य शुभगुणविशिष्टायां पुण्यतिथौ गृहप्रतिष्ठाङ्गभूतवास्तुपूजनं सकलकर्म्मसमृध्यर्थमीशानादिरुद्रदासपर्यन्तानां पञ्चत्वारिंशत्वास्तुदेवतानां पूजनमहं करिष्ये।** तदनन्तर चन्दन और पुष्प लेकर ईशानाय नमः से रुद्रपर्यन्त इदमावाहनं कहते हुए आवाहन करे **अत्रागच्छन्तु वरदा भवन्तु पञ्चचत्वारिंशद्देवताभ्य इदमासनम्। एवं पाद्यार्घाचमनीयस्नानीय-वस्त्रयज्ञोपवीतोत्तरीयं, गन्धं, पुष्पं, धूपं, दीपं, ताम्बूलं नमस्कारः पञ्चचत्वारिंशद्देवताभ्यो नमः। दध्योदनेन बलिदानम्। ॐ ईशानाय नमः पूजानैवेद्यं दध्योदनं च ईशानाय स्वाहा। ॐ पर्जन्याय नमः पूजानैवेद्यं दध्योदनं पर्ज्जन्याय स्वाहा। एवं जयन्ताय पीतध्वजाय ॐ इन्द्राय नमः। पूजानैवेद्यं दध्योदनं च इन्द्राय स्वाहा। ॐ सूर्याय0 ॐ सत्याय0 ॐभृशाय0 ॐ अन्तरिक्षाय0 ॐ वायवे0 ॐ पूष्णे0 ॐ वितथाय0 ॐ गृहक्षेत्राय0 ॐ यमाय0 ॐ गन्धर्वाय0 ॐ भृङ्गराजाय0 ॐ मृगाय0 ॐ पितृगणाय0 ॐ दौवारकाय0 ॐ सुग्रीवाय0 ॐ पुष्पदन्ताय0 ॐ वरुणाय0 ॐ असुराय0 ॐ शेषाय0 पापयक्ष्मणे0 रोगाय0 नागाय0 उरव्याय0 मल्लाटाय0 सोमाय0 भुजङ्गपतये0 अदितये0, दितये0। कोणेषु ब्रह्मणे, अर्यम्णे, विवस्वते, मित्राय। ततो मध्यात् पृथ्वीधराय, अपाय, आपवत्साय, सवित्रे, सावित्राय, जयन्ताय, विबुधाधिपाय, रुद्राय। रुद्रदासाय। वास्तुप्रीतये धेनुदानं। पूजितोऽसि उमामहेश्वरदानं च। ॐ उमा महेश्वराभ्यां नमः। सप्तधान्यदानम्। पूजितोऽसि मया वास्तो हेमाद्यैरर्चनैः शुभैः। प्रसीद याहि विश्वेश! देहि मे गृहजं सुखम्।।** इति प्रार्थना। तदनन्तर घर अन्दर प्रवेश कर कोषागार के दक्षिण कोण में श्री लिखकर **ॐ अद्य पूर्वोक्तगुणविशिष्टायां तिथौ वास्तुपूजनगृह-प्रवेशाद्यङ्गभूतश्री-**

**स्थापनादि कर्माहं करिष्ये।** पञ्चामृत, आरती नैवेद्य समर्पण आवाहन आदि पूर्ववत् करनी चाहिए। एक पात्र में धान्य सरसों, चांदी युक्त दूब अक्षत, गंध पुष्प आदि सामग्री लेकर स्वस्तिवाचन करे। **ॐ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् पृथुर्भव सुखदस्त्वमग्ने: पुरीषवाहन:** इस मंत्र से गड्ढे के मध्य में उपर्युक्त सामग्री रखकर उस पर मिट्टी डाल दे। स्वस्तिक का चिन्ह बना दे। तदनन्तर सूत से लिपटे गूलर के पत्ते को दूध के साथ, दूब, गोबर दधि मधु, घी, कुश और जौ इन सभी को कांस्य के बर्तन में एकत्र कर जल सहित एक पात्र में रखकर पूर्वादि दिशाओं के क्रम से घर के मध्य में अभिषेक एवं आसन आदि का सिंचन करे।

गृह शेष वास्तु पूजा-**दक्षिणद्वारे धात्रे नमः, वामद्वारे विधात्रे नमः। गणेशाय नमः। पट्टशालायै नमः। मण्डपदेवताभ्यो नमः। कण्डनीभ्यो नमः। पेषिण्यै नमः। इसके अनन्तर इस मंत्र से चुह्लादि बलिदान करे।-ॐ धर्माय नमः इससे। पुनः धर्माय नमः वामवाहौ ॐ स्वरस्वरपरिवर्तनीयाय नमःकिं धान्यादि भाण्डेषु। ॐ जलामृताय वरुणाय नमः जलभाण्डेषु। ॐ महाविघ्नराजाय नमः गृहप्रधानाधारे। ॐ महाशुभांगाय नमः, पेषिण्यां। ॐ रुद्रकोटिगिरिकायै नमः इत्युलूखले। ॐ बलभद्रप्रियाय प्रहरणाय नमः इति मुशले। ॐ मृत्यवे देवीचोदिते नमः इति संमार्जन्यां। ॐ कामार्थंकुसुमायु-धाय नमः इति शयनीय-शिरसि। ॐ स्कन्दाय गृहाधिपतये नमः** मूत्र पुरीषयुक्त गोशाला में बलिदान करें, मार्ग-मार्ग में-**देवताभ्यो नमः। मध्यस्तंभाधस्तात्।**

**गृहप्रवेश**-उसके बाद गृहनक्षत्रों के अनुकूल पवित्र दिनों में गृह पूजा सम्बन्धी कृत्य समाप्त हो जाने पर मातृ पूजा आदि आभ्युदयिक कृत्य कर ब्राह्मणों के साथ स्वस्ति वाचन करते हुए मांगलिक गाजे-बाजे के साथ जलपूर्ण कलश एवं गो ब्राह्मण के साथ, स्नान कर श्वेत वस्त्र एवं माला से युक्त सपरिवार तोरण युक्त मुख्यद्वार से प्रवेश करें। **ॐ धर्मस्थूणा राजा ँ श्रीस्तूयमहोरात्रेद्वारफलके इन्द्रस्य गृहावसमतो वरूथिनहं प्रपद्ये सह प्रजया पशुभिः सह यन्मे किञ्चिदस्युपहतः सर्वगणः सखायः साधु संमतः तां त्वा शालेदिष्टपीठा गृहान्नः सन्तु सर्वतः।।** तदनन्तर गृहदेव की दोष निवारण हेतु प्रार्थना करें-**प्रार्थयामीत्यहं देवं शालायामधिपस्तु यः। प्रायश्चित्तप्रसंगेन गृहार्थे यन्मया कृतम्। मूलच्छेदं तृणच्छेदं कृमीणां च निपातनम्। हननं जलजीवनां भूमेः शस्त्रेण पातनम्। अनृतं भाषितं यच्च किंचिदर्थस्य पातनम्-तत्सर्वं ही क्षमस्व त्वं यन्मया दुष्कृतं कृतम्। गृहार्थे यत्कृतं पापमज्ञानेनाथ चेतसा। तत्सर्व क्षम्यतां देवि! शाले! मम क्षमां कुरु।।**

इति गृहप्रतिष्ठा प्रवेश विधि।

# मूलगण्डान्त शान्ति प्रयोग

जिस मूल नक्षत्र में शिशु का जन्म हुआ हो उसके दूसरे मूल नक्षत्र में स्नान कर श्वेत वस्त्र पहन कर जातक एवं पत्नी सहित यजमान (पिता) पूजा के आसन पर पूर्वाभिमुख बैठ आचमन प्राणायाम एवं आसन शुद्धि कर हाथ में अक्षत पुष्प लेकर **ॐ स्वस्ति न इन्द्रो वृद्धश्रवेत्यादि0 स्वस्त्ययन (मन्त्रों को) ॐ सुमुखश्चैकदन्तश्चेत्यादि0** मङ्गलमंत्र पढ़े। तदनन्तर प्रतिज्ञा संकल्प करे। **ॐ अद्येत्यादि देशकालौ संकीर्त्य अमुकगोत्रेऽमुकशर्मा (वर्मागुप्तो वा सपत्नीकोऽहं अस्य बालकस्य अस्याः कुमार्याः वा मूलनक्षत्र (ज्येष्ठा, आश्लेषा, मघा रेवती अश्विनी वा) तदधिकरणकामुकपादजननारिष्टनिवारणपूर्वकं तदीयायुर्बृद्ध्युत्तरपित्रादिसम्बन्धिशुभफलप्राप्त्यर्थे श्रीपरमेश्वरप्रीतये च गोमुखप्रसवपूर्वकं अमुकनक्षत्रगण्डात् शान्तिमहं करिष्ये तन्निर्विघ्नतासिद्ध्यर्थं तदङ्गत्वेन गणपत्यादिपूजनं च करिष्ये।** तदनन्तर श्री गणपति, नवग्रह, नान्दीश्राद्ध, आदि कृत्य सामान्य पूजन विधि के अनुसार करायें अथवा स्वर्ण दान करें। तत्र संकल्पः-**ॐ अद्येत्यादि अमुकगोत्रस्यात्मजस्यामुकशर्मणः मूला (ज्येष्ठा, मघा रेवती वा) नक्षत्रधिकरणकजन्माङ्गभूतकर्तव्याभ्युदयिकश्राद्धजन्य- फलसम्प्राप्त्यर्थममुं यथाशक्ति सुवर्णमग्निदैवतं यथानामगोत्रयामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।**

तदनन्तर आचार्य मण्डप से बाहर यजमान के घर के ईशान भाग में सफेद सरसों छींटे। **ॐ आपो हिष्ठेत्यादि** इस मंत्र (देंखें नित्य संध्या) से पञ्चगव्य द्वारा प्रोक्षण कर वहां चावल के आटे से अष्टदल कमल बनाकर उसके ऊपर यथाशक्ति अनाज फैलाकर उस अनाज के ऊपर नूतन बांस के सूप को रखकर उस पर तिल एवं कुश फैलाकर इसके ऊपर लाल वस्त्र फैलाकर उस पर शिशु का मुख पूर्व की ओर और पांव पश्चिम की ओर रखकर तिगुने मांगलिक सूत्र से उस शिशु को सूप के साथ लपेटकर शिशु के समीप गोमुख लाकर शिशु स्पर्श करायें। पुनः गोमुख से शिशु की उत्पत्ति का भावकर पञ्चगव्य से कुश द्वारा शिशु का मार्जन करे। तत्र मंत्र **ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आषिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।।** अथवा गवामङ्गेषु इस मंत्र से गौ के सभी अङ्गों का स्पर्श करायें। **ॐ गवामङ्गेषु तिष्ठन्ति भूवनानि चतुर्दश। यस्मात् तस्माच्छिवं मे स्यादिहलोके परत्र च।** तदनन्तर विष्णो श्रेष्ठ0 इस मंत्र से आचार्य शिशु को लेकर माता के हाथ में दे। तत्र मन्त्र-**ॐ विष्णो श्रेष्ठेन रूपेणास्यां नार्यां गवीन्यां पुमांसं पुत्रमाधेहि दशमे मासि सूतवे।** उसके बाद माता गोमुख के पास से शिशु को लाकर गाय के पूछ भाग के तरफ शिशु

को देखकर अपने पति के हाथ में दे। पिता-**ॐ अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि संजीव शरदः शतम्**।। इस मंत्र से तीन बार शिशु के मस्तक को सूंघकर माता को दे दे। तदनन्तर आचार्य **आपोहिष्ठा.** इस मंत्र द्वारा बालक को पंचगव्य से सींचे। तदनन्तर पिता-**गोमुखप्रसवाख्यकर्मणः पुण्याहं भवन्तो ब्रुवन्तु**। आचार्य-**ॐ पुण्याहं ॐ पुण्याहं इति ब्रूयात्**। उसके बाद गाय अथवा गो निष्क्रयीभूत द्रव्य संकल्पपूर्वक आचार्य के लिए देकर यथाशक्ति नवग्रह की प्रीति हेतु गो, स्वर्ण, वस्त्र, अनाज आदि दें। संकल्प-**ॐ अथ गोमुखप्रसवाख्यकर्मणः सांगतासिद्ध्यर्थं सूर्यादिनवग्रहाणां प्रीत्यर्थं चेमानि गोवस्त्रसुवर्णधान्यानि सदक्षिणानि तन्निष्क्रयीभूतानि द्रव्याणि वा यथानामगोत्राय ब्राह्मणायदातुमहमुत्सृजे**। तदनन्तर ईशान दिशा में अनाज के ऊपर कलश स्थापन विधि द्वारा वरुण कलश को स्थपित कर उस पर चन्दन, अगुरु, कुंकुम, सभी प्रकार के चन्दन एवं श्वेत सरसों छीटें। कलश के ऊपर स्वर्ण निर्मित अधिदेवता इन्द्र, प्रत्यभिदेवता जल सहित निर्ऋति प्रतिमा स्थापित कर अग्न्युत्तारण पूर्वक **ॐ असुन्वन्त यजमानमिच्छंस्तेन सेत्वामन्विहितस्करस्य। अन्यमस्मादिच्छसा-तऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु**। इस मंत्र से पूजन करे। एवं आश्लेषा में सार्प, मघा में पितृ, ज्येष्ठा में इन्द्र, रेवती में पूषा, अश्विनी में अश्विनी की प्रतिमा तत्तद् मंत्रों के द्वारा अधिदेवता प्रत्यभिदेवता सहित स्थापित करे। आवाहन कर पूजन करें।

आश्लेषा मंत्र-**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।।**

मघा मन्त्र-**ॐ उशन्तस्त्वा निधोमह्युशन्तःसमिधीमहि। उशन्नुशतऽआवह पितृन् हविषेऽअत्तवे।।**

ज्येष्ठा मन्त्र-**ॐ सयोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रुरपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः।।**

रेवती मन्त्र-**ॐ पूषन्तव ब्रते वयं न रिष्येम कदाचन। स्तोतारस्त इह स्मसि।।**

अश्विनी मन्त्र-**ॐ यावाङ्कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षितम्**।। अग्न्युत्तारण एवं प्राण प्रतिष्ठा विशिष्ट पूजन विधि के अनुसार करायें। उसके चारों ओर सुपारियों एवं अक्षत पुंजों पर नक्षत्र के देवता अश्विनी आदि का आवाहन करे। **ॐ अश्विभ्यां नमः अश्विनावाहयामि स्थापयामि।।1।। ॐ यमाय0 यमं0 2। ॐ अग्नये0 अग्निं0 3।। ॐ प्रजापतये0 प्रजापतिं0 4।। ॐ सोमाय0 सोमं0 5। ॐ रुद्राय नमः रुद्रं0 6। ॐ अदितये0 7 अदितिं।**

**ॐ बृहस्पतये0 बृहस्पतिं0 8 ॐ सर्पेभ्यो0 सर्पान्0 9। ॐ पितृभ्यो0 पितृन् 10 ॐ भगाय0 भगं0 11 ॐ अर्यम्णे0 अर्यमाणम् 12 ॐ सवित्रे0 सवितारं0 13। ॐ त्वष्ट्रे0 त्वष्टारम् 14 ॐ वायवे0 वायुं 15 ॐ इन्द्राग्नीभ्यां0 इन्द्राग्नीं0 16 ॐ मित्राय0 मित्रं0 17 इन्द्राय0 इन्द्रं0 18 ॐ निर्ऋतये0 निर्ऋतिं 19। ॐ अद्भ्यो0 अप:0 20। ॐ विश्वेभ्यो देवेभ्यो0 विश्वान् देवान्0 21। ॐ ब्रह्मणे0 ब्रह्माणम्0 22 ॐ विष्णवे विष्णुं0 23। ॐ वसुभ्यो0 वसून् 24। ॐ वरुणाय0 वरुणम्0 25। ॐ अजैकपदे0 अजैकपादं 26। ॐअहिर्बु-ध्न्याय0 अहिर्बुध्न्यम्27 ॐ पूष्णे0 पूषाणम् 28।। इत्यावाह्य ॐ मनोजूति0 इति मन्त्रेण ॐ भूर्भुवः स्वः ॐ निर्ऋत्याद्यावाहितदेवताभ्यो नमः आवाहितदेवता इह सुप्रतिष्ठिता वरदा भवत** इस प्रकार चन्दनादि द्वारा पूजा कर **ॐ अनया पूजया निर्ऋत्यावाहितदेवताः प्रीयन्ताम्।** मंत्र पढ़कर जल छोड़ दे। उसके बाद वरुण कलश के सीप चावल एवं गोधूम चूर्ण आदि द्वारा सफेद कमल बनाकर उसके ऊपर सप्त धान्य राशि को रखकर उसके बीच सौ छेद वाले कलश को रख उसके चारों ओर पूर्वादि दिशाओं के क्रम से चार घड़ों को कलश स्थापन विधि (देखें सामान्य पूजन विधि) के अनुसार स्थापित करे। उसमें पहले घड़े में लाल चन्दन कमल, कुष्ट, प्रियंगु, शुंठी, मुस्ता, आमलक, वच, श्वेतसर्षप, मुरामांसी अगर उशीरादि उपलब्ध वस्तुओं को छोड़ें। तदनन्तर **ॐ नमस्ते रुद्र मन्यव0** इत्यादि परिशिष्ट में दिये गये रुद्राष्टाध्यायी के 5वें अध्याय के आदि से 16 मंत्र) रुद्राध्यायी को पढ़कर कलश स्पर्श करे। फूल छोड़ दे। दक्षिणकुंभ में पंचामृत, गजमद, तीर्थोदक, सप्तधान्यसुवर्णानि छोड़ दें। **ॐ आशुः शिशान0** इस बारह मंत्रों का पाठ करें (देखें परिशिष्ट /रुद्राष्टाध्यायी /तृतीय अध्याय) पश्चिमकुंभ में सप्तमृत्तिका छोड़े। **ॐ कृणुष्वाजः0** पांच मंत्रों को पढ़ें (देखें परिशिष्ट/रुद्राष्टा,) उत्तरकुंभे पंचरत्न, वट, अश्वत्थ, पलाश, प्लक्ष, उदुम्बर के पत्ते और सात कुंओं का जल छोड़ें। रक्षोहरण चार मंत्रों का जप करे। बीच के शत छिद्र वाले कलश में शत औषधियों उसके अभाव में सुलभ अच्छे वृक्षों के पल्लवों को विष्णुक्रान्ता, सहदेवी, तुलसी, शतावरी, कुश, कुंकुम को डालें। **ॐ त्र्यम्बकं** इस मंत्र का 108 बार जप करे। जप के बाद कलश का स्पर्श करे तथा अक्षत, गंध और पुष्प छोड़ें और पूर्णपात्र पर वरुणावहन कर पूजन करे, तदनन्तर अग्निस्थापन स्थान से पश्चिम दिशा में किसी तरह से ऊपर शिकहर बांधकर वहीं बांस के पात्र में कम्बल के टुकड़े को फैलाकर उसके ऊपर सौ छिद्र वाले कलश रखें। तदनन्तर उस कलश के नीचे अच्छे काठ से निर्मित पीढ़ा को रखकर उसे श्वेत वस्त्र से ढक दें। वहां पुत्र एवं पत्नी के सहित यजमान को बैठाएं। उसके बाद शिक्य (शिकहर) में स्थित कलश में धीरे-धीरे चार कुम्भों में स्थित जल को डालकर आचार्य अभिषेक मंत्र द्वारा सपत्नीक यजमान

शिशु के ऊपर जल धारा गिराये। **ॐ देवस्थ त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिसिञ्चाम्यसौ।। ॐ देवस्य त्वा0।। सरस्वत्यै वाचोयन्तु यन्त्रेणाग्नेः साम्राज्येनाभिषिंचामि ॐ देवस्य त्वा0।। अश्विनो भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिंचामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिंचामीन्द्र-स्येन्द्रियेण बलाय श्रियै यशसेऽभिषिंचामि। ॐ योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः। मूला (मघा, ज्येष्टाऽऽश्लेषा) जातस्य शिशोर्दोषं मातापित्रोः व्यपोहतु।।1।। ॐ योऽसौ शक्तिधरो देवो हुतभुङ् मेषवाहनः। सप्तजिह्वश्च देवोऽग्निर्मूला (ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।2।। योऽसौ दण्डधरो देवो धर्मो महिषवाहनः। मूला (ज्येष्ठा, मघा, सार्प, गण्ड) जातशिशोर्दोषं व्यपोहतु यमो मम।।3।। ॐ योऽसौ खड्गधरो देवो निर्ऋतिर्राक्षसाधिपः। प्रशामयतु मूलोत्थं (ज्येष्ठोत्थं, मघोत्थं, सार्पोत्थं, गण्डोत्थं) दोषं गण्डान्तसम्भवम्।।4।। ॐ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः। नक्रवाहः प्रचेता वै मूला ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।5।। ॐ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः। प्रशामयतु मूलोत्थं, (ज्येष्ठोत्थं, मघोत्थं, सार्पोत्थं, गण्डोत्थं) दोषं बालस्य शान्तिदः।।6।। ॐ योऽसौ निधिपतिर्देवः खड्गभृद् वाजिवाहनः। मातापित्रोः शिशोश्चैव मूला (ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।7।। ॐ योऽसौपशुपतिर्देवः पिनाकी वृषवाहनः। आश्लेषा (मघा, ज्येष्ठा, मूला गण्डा) न्तदोषान्ममाशु व्यपोहतु।।8।। ॐ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः। सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः।।9।। ॐ मूलर्क्षे (ज्येष्ठाऽऽश्लेषा, गण्ड) जातबालस्य मातृपित्रोर्धनस्य चा भ्रातृज्ञातिकुलस्थानां दोषं सर्व व्यपोहतु।।10।। ॐ पितरः सर्वभूतानां रक्षन्तु पितरः सदा। मूला (ज्येष्ठा, मघा, सार्प, गण्ड) नक्षत्रजातस्य वित्तं च ज्ञातिवान्धवान्।।11।।** एवं ज्येष्ठा आश्लेषा आदि नक्षत्रों के शान्ति में ततद् निर्धारित मंत्रों के आधार पर तत्तद् कार्य करें।

तदनन्तर यजमान शिशु एवं पत्नी के साथ शुद्ध जल से स्नान कर दूसरा वस्त्र पहन गीले कपड़े को नापित (नाई) को देकर आचमन करे उसक बाद बैठकर यजमान ही **ॐ शिरोमेश्रीर्यशः** इस मंत्र द्वारा अपने अंगों का स्पर्श करे। **तद्यथा ॐ शिरो मे श्रीरस्तु** शिर छूना चाहिए। इसी प्रकार सभी जगह समझना चाहिए। **ॐ यशो मे मुखमस्तु।** इति मुखम्। **ॐ त्विषिर्मे केशाः सन्तु। इति मस्तकस्थान् केशान्। ॐ श्मश्रूणि सन्तु इति कूर्चमुखजरोमाणि। ॐ राजा में प्राणा अमृतमस्तु इति नासिकायां प्राणान्। ॐ सम्राण्मे चक्षुरस्तु इति युगपच्चक्षुषी। ॐ विराट् मे**

**श्रोत्रमस्तु। इति श्रोत्रम्। ॐ जिह्वा मे भद्रमस्तु। इति जिह्वा ॐ वाङ्मे महोऽस्तु। इति जिह्वामेव। ॐ मनो मे मन्युरस्तु। इति हृदयम्। (उदकोपस्पर्शः) ॐ स्वराणमे भामोऽस्तु। इतिभुवोर्मध्यम्। ॐ मोदाः प्रमोदाः मेऽङ्गुल्यः सन्तु। इति हस्ताङ्गुलीः पादाङ्गुलीश्च। ॐ मोदाः प्रमोदाः मेऽङ्गानिः सन्तु। इति सर्वाङ्गानि। ॐ मित्रं मे सहोऽस्तु। इति स्वशरीरगतं बलम्। ॐबाहू मे बलमिन्द्रियं स्तां। इति बाहू। ॐ आत्मा मे क्षत्रमस्तु। इति हृदयम्। (उदकोपस्पर्शनम्) ॐ उरो मे क्षत्रमस्तु। इति हृदयमेव। ॐ पृष्ठं मे राष्ट्रमस्तु। इति पृष्ठवंशम्। ॐ उदरे मे राष्ट्रमस्तु इति उदरम्। ॐ अंसौ मे राष्ट्रंस्तां। इत्यंशौ ॐ ग्रीवाश्चमे राष्ट्रं सन्तु। इति ग्रीवा। ॐ श्रोणी में राष्ट्रंस्तां कटिद्वयम्। ॐ ऊरू मे राष्ट्रंस्तां। इत्यूरू। ॐ अरत्नी मे राष्ट्रंस्तां इत्यरत्नी। ॐ जानुनी मे राष्ट्रंष्तां इति जानुनी। ॐ विशो मेऽङ्गानि सर्वत्र सन्तु। इति सर्वाङ्गानि। ॐ नाभिर्मे वित्तमस्तु। इति नाभिम्। ॐ नाभिर्मे विज्ञानमस्तु। इति नाभिमेव। ॐ पायुर्मेऽपचितिरस्तु। इतिपायुं। ॐ भसन्मेऽपचितिरस्तु। इति पायुमेव। ॐ आनन्दनन्दावाण्डौ मे स्तां। इत्यण्डौ। ॐ भगो मे यशोऽस्तु। इति लिङ्गम् ॐ सौभाग्यं मे यशोऽस्तु। इति लिङ्गमेव। ॐ जङ्घाभ्यां धर्मोऽस्मि। इति जंघे। ॐ पद्म्यां धर्मोऽस्मि। इति पादौ। ॐ विशि राजा प्रतिसर्वदेहम्।**

तदनन्तर आचार्य कुशकण्डिका करे। **ॐ प्रजापतये स्वाहा0 से प्रारम्भ कर ॐ विश्ववर्म्मन् हविषा0** यहां तक होम प्रकरण के अनुसार हवन करे। **प्रधानहोम**-एक हजार आठ या एक सौ आठ या अट्ठाइस या आठ आहूति प्रदान करे।

मूलनक्षत्रहोम-**ओं असुन्वन्त मे यजमानमिच्छस्तेनस्येत्यामन्विर्हिंतस्करस्य। अन्यमस्मदिच्छ सातषाऽइन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूंरपमृधोनुदस्वा धा वयं कृणुहि विश्वतो नः स्वाहा।** प्रत्यधिदेवता मंत्र-**ॐ आपोहि ष्ठा मयोभुवस्तान ऊर्जे दधातन महे रणाय चक्षसे स्वाहा।** आश्लेषामन्त्र-**ॐ नमोऽस्तुसर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा।** अधिदेवता गुरु मन्त्र-**ॐ बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतं प्रजा तदसमासु द्रविणं धेहि चित्रं स्वाहा।** तत्प्रत्यधिदेवता पितृमन्त्र-**ॐ उषन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितृन् हविषे अत्तवे स्वाहा।** मघा नक्षत्र मन्त्रहोम-**पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यस्वधायिभ्यः स्वधानमः अक्षन् न पितरो मीमदंत पितरोतीतृपन्तः पितरः पितरः शुन्धध्वं स्वाहा।** तदधिदेवता सर्पमन्त्र-**ॐ नमोऽस्तु सर्पेति0 स्वा0**

तत्प्रत्यधिदेवतामन्त्र-**ॐ भगं प्रणेतर्भग सत्यराधो भगेमान्धियमुदवाददन्नः भगं प्र नो जनय गोभिरश्वैर्भग प्रनृभिर्नृवन्तः श्याम स्वाहा।** ज्येष्ठानक्षत्रमन्त्रहोम-**ॐ इन्द्र आसां नेतां बृहस्पतिर्दक्षिणायज्ञः पुर एतु सोमः। देवसेनानामभि-भञ्जयन्तीनाम्मरुतो यन्त्वग्रं स्वाहा।** तदधिदेवतामन्त्र-**ॐ मित्रस्य च ऋषणीधृतो वो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमं स्वाहा।** तत्प्रत्यधिदेवता मन्त्र-**ॐ असुन्वन्तम0 स्वाहा।** रेवती मन्त्र होम-**ॐ पूषन्तव व्व्रते व्ययन्न रिष्येम कदाचन स्तोतारस्त इह स्मसि स्वाहा।** अधिदेवतामन्त्र-**ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽस्तु मा मा हि ँ सीः। निवर्तयाम्यायुषेन्नाद्याय प्प्रजननाय रायष्पोषाय सुप्रजास्त्वाय सुवीर्याय स्वाहा।** प्रत्यधिदेवतामन्त्र-**ॐ यावाङ्कशा0 इत्यादि।**

अश्विनी नक्षत्र मन्त्र होम-**ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम्। वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियं स्वाहा।** तदधिदेवता मन्त्र-**ॐ पूषन्तव व्व्रते व्वयंन्न रिष्येम कदाचन। स्तोतारस्त इह स्मसि स्वाहा।** प्रत्यधिदेवतामन्त्र-**ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा धर्माय स्वाहा धर्मपित्रे स्वाहा।** इति प्रधानादिदेवताहोम।

तदनन्तर नक्षत्र देवताओं को नाम मंत्रों के द्वारा प्रत्येक को आठ बार श्रुवा के द्वारा आहूति प्रदान कर स्विष्टत्कृद् होम करे। पुनः भूः से लेकर प्रजापति पर्यन्त नव आहुति करे। उसके बाद दिक्पालों के साथ-साथ बलिदान आदि सभी क्रियाओं को करके प्रधान कुम्भ में स्थित जल को लेकर ब्राह्मण, पत्नी शिशु सहित यजमान का अभिसिञ्चन करें। तदनन्तर मंगल स्नान के बाद दक्षिणा दान का संकल्प करें। **ॐ अद्येह इदं घटं स्वर्णमूर्तिसहितं यथा नामगोत्राय0** उसके बाद कांस पात्र में स्थित घी में शिशु के मुख का अवलोकन कराना चाहिए। नए वस्त्र से आच्छादित शिशु को माता के गोद में रखकर शंख ध्वनि के साथ पिता शिशु का घी से पूर्ण छाया पात्र में मुख देखकर एवं उसकी पत्नी विधिवत् मुख देखकर छाया पात्र संकल्प पूर्वक ब्राह्मण को दे। उसके बाद आवाहित देवताओं का उत्तरपूजन, सूर्यार्घ्यदान, 27 या 10 ब्राह्मणों को भोजन आदि कृत्य करे। **आश्लेषादिगण्डान्तयोः प्रसवेऽपि इदमेवानुष्ठेयम्। इति मूलादिगण्डान्तशान्तिः।।**

## कार्तिक स्त्री प्रसूता शान्ति

पुण्यदिन में स्नान किये सपत्नीक सुपुत्र यजमान पूर्वाभिमुख बैठकर ब्राह्मण द्वारा किये गये स्वस्तिवाचन के पश्चात् प्रतिज्ञा करे। तद्यथा-**ॐ तत्सदद्येत्याद्युक्त्वा ज्ञाताज्ञातकायवाङ्मनस्कृतसकलपापक्षयपूर्वक-श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामः**

**सौरकार्तिकमासाधिकरणकैतत्स्वीयस्त्रीप्रसव-संसूचितैतत्कुमारै-तत्पित्राद्यरिष्टोपशमनपूर्वंक-श्रीब्रह्मप्रभृतिदेवताप्रसादाऽव्यवहितोत्तरकालिकैतद्बाल-कैतत्पित्रादिजना-धिकरणकायुःसुखसम्पद्रक्षादिसिद्ध्यर्थं श्रीब्रह्मादिपूजनरूपां कार्तिकस्त्रीप्रसूताशान्तिमहं करिष्ये। तदङ्गभूतं गणपत्यादिपूजनञ्च करिष्ये।** इस प्रकार प्रतिज्ञा कर विधिपूर्वक गणेशादि सभी देवताओं की पूजा करे। पुनः पूर्व दिशा में अनाज के ऊपर कलश स्थापित कर उसके ऊपर ब्रह्मा की पूजा करें। आवाहन मंत्र-**ॐ एह्येहि सर्वामरपूज्यपाद पितामहाधोक्षज पद्म जात। चतुर्मुखध्यानरताष्टनेत्र त्वां ब्रह्ममूर्ते भगवन्नमस्ते।** आवाहन कर स्थापना करे। **ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सु बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः।।** इस मंत्र से ब्रह्मा की पूजा करे। पुनः वरण सामग्री लेकर-**ॐ अद्येत्यादि पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणकार्तिकस्वस्त्री- प्रसूताशान्त्यङ्गत्वेन ब्रह्मजज्ञानमिति मन्त्रेण यथापरिमितं जपं कारयितुमेभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं जापकत्वेन त्वां वृणे।** इस मंत्र से वरण करे। पुनः दक्षिण दिशा में गेहूँ अन्न पर कलश रखकर श्री विष्णु भगवान की पूजा करे। **ॐ एह्येहि नारायण चक्रपाणे लक्ष्मीपते दानववंशवह्ने। सुवर्णपृष्ठासन पद्मनाभ जनार्दनस्त्वं भगवन्नमस्ते।** इस प्रकार आवाहन कर **ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्यपा ꣳ सुरे स्वाहा** इस मंत्र द्वारा विष्णु की पूजा करे और वरण द्रव्य लेकर संकल्प वाक्य पूर्ववत् पढ़ें। तदनन्तर पशिचम दिशा में चावल पर कलश स्थापित कर रुद्र की पूजा करे। **ॐ एह्येहि भो शंकर शूलपाणे गंगाधर श्रीकर नीलकण्ठ, उमापते भस्मविभूषितांग महेश्वर त्वं भगवन्नमस्ते।** इस प्रकार आवाहन कर **ॐ नमस्ते रुद्र मन्यव उतोत इषवे नमः बाहुभ्यामुत ते नमः** इस मंत्र द्वारा पाद्यादि द्वारा रुद्र की पूजा करे। पुनः वरण सामग्री लेकर पूर्ववत् संकल्प करे। पुनः उत्तर दिशा में धान के ऊपर कलश रखकर उसके ऊपर श्री सूर्य की पूजा करे। आवाहन मन्त्र-**ॐ दिवाकरं सहस्रांशुं ब्रह्माद्यैरमरैःस्तुतं। लोकनाथं जगच्चक्षुः सूर्यमावाहयाम्यहं। ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र श्रीसूर्य इहागच्छेत्यावाह्य स्थापयेत्। ॐ आकृष्णेन0** मंत्र से पाद्यादि द्वारा सूर्य की पूजा करे।

पुनः वरण सामग्री लेकर **ॐ अद्येत्यादि पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणकार्तिकस्वस्त्रीप्रसूताशान्त्यंगत्वेन ॐ आकृष्णेति मंत्रेण यथापरिमितं जपं कारयितुं एभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं जापकत्वेन त्वामहं वृणे।**

पुनः **त्र्यम्बक0** इस मंत्र का जप ब्राह्मण द्वारा यथाशक्ति कराये।

संकल्प-**ॐ अद्येत्यादि पूर्वंप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणकार्तिकमास-स्त्रीप्रसूताशान्त्यङ्त्वेन त्र्यम्बकमिति मन्त्रस्य लक्षं वा पञ्चाशत् सहस्त्रं अयुतं वा जपं कारयितुमेभिर्वरणद्रव्यैरमुकगोत्रान् अमुकामुकशर्मणो ब्राह्मणान्जापकत्वेन युष्मानहं वृणे।** इस प्रकार वरण करे। इस प्रकार ली गयी वरण सामग्रियों से चार ही ब्राह्मण यथादिष्ट दिशाओं में जाकर जप करें। जप के बाद बैठे हुए आचार्यों में प्रमुख आचार्य विधिवत् अग्निस्थापन, कुशकण्डिका कर हवन करे (देखें विशिष्ट देव पूजन विधि/कुशकण्डिका /होम) **ॐप्रजापतये स्वाहा इत्यारभ्य ॐउदुत्तमं वरुण पाशमित्यन्तं हुत्वा ॐ सूर्याय स्वाहा।।1।। ॐ ब्रह्मणे स्वाहा।।2।। ॐ विष्णवे स्वाहा।।3।। ॐ रुद्राय स्वाहा।।4।। ॐ शंभवे स्वाहा।।5।। ॐ ईशाय स्वाहा।।6।। ॐ पशुपतये स्वाहा।।7।। ॐ शिवाय स्वाहा।।8।। ॐ शूलिने स्वाहा ।।9।। ॐ महेश्वराय स्वाहा।।10।। ॐ ईश्वराय स्वाहा।। 11।। ॐ सर्वाय स्वापहा।।12।। ॐ ईशानाय स्वाहा।।13।। ॐ शंकराय स्वाहा।।14।। ॐ चन्द्रशेखराय स्वाहा।।15।। ॐ भूतेशाय स्वाहा।।16।। ॐ खण्डपरशवे स्वाहा।। 17।। ॐ गिरीशाय स्वाहा।।18।। ॐ मृडाय स्वाहा।।19।। ॐमृत्युंजयाय स्वाहा।।20।। ॐ कृत्तिवाससे स्वाहा।।21।। ॐ पिनाकिने स्वाहा।।22।। प्रमथाधिपाय स्वाहा।।23।। ॐ उग्राय स्वाहा।।24।। ॐ कपर्दिने स्वाहा।।25।। ॐ श्रीकण्ठाय स्वाहा।।26।। ॐ शितिकंठाय स्वाहा।।27।। ॐ कपालभृते स्वाहा।।28।। ॐ वामदेवाय स्वाहा।।29।। ॐ विरूपाक्षाय स्वाहा।।30।। ॐ त्रिलोचनाय स्वाहा।।31।। ॐ कृशानुरेतसे स्वाहा।।32।। ॐ सर्वज्ञाय स्वाहा।।33।। ॐ धूर्जटये स्वाहा।।34।। ॐ नीललोहिताय स्वाहा।।35।। ॐ स्मरहराय स्वाहा।।36।। ॐ भर्गाय स्वाहा।।37।। ॐ त्र्यम्बकाय स्वाहा।।38।। ॐ त्रिपुरान्तकाय स्वाहा।।39।। गंगाधराय स्वाहा।।40।।**

इस प्रकार **'त्र्यम्बकम्'0** मंत्र के द्वारा घी युक्त विल्वपत्र से दशांश हवन करे। उसके बाद सपत्नीक यजमान शिशु को गोद में लेकर बैठे। आचार्य वेदोक्त मंत्रों तथा पुराणोक्त मंत्रों द्वारा तीन कुश से अभिषेक करे।

मन्त्र-**सुरास्त्वामभिषिञ्चन्तु0** इत्यादि **अग्नितो मे भयं मास्तु रोगाच्च व्याधिवंधनात्। सशस्त्रविषतोयौघात् भयं नाशय मे सदा। योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः कार्तिकस्त्रीप्रसूतायाः दोषमाशु व्यपोहतु।** अभिषेक के बाद प्रार्थना-**रक्ष मां पुत्रपौत्रांश्च रक्ष मां पशुबन्धनात्। रक्ष पत्नीं पतिं चैव पितरं मातरं धनम्।।**

तदनन्तर छायापात्र दान, आवाहित देवताओं की उत्तर पूजा, सूर्यार्घ्यदान आदि कृत्य कर **प्रमादात्0** इस श्लोक को पढ़ें।

इति कार्तिकस्त्रीप्रसूताशान्ति।।

ऊर्ध्वं मधुधा दिवि पाजो अश्रेत् प्र रोचना रुरुचे रण्वसंदृक्
ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः
ऋतस्य बुध्न उषसामिषण्यन् वृषा मही रोदसी आ विवेश ।
मही मित्रस्य वरुणस्य माया चन्द्रेव भानुं वि दधे पुरुत्रा

## वाक्सूक्तम्

८ वागाम्भृणी । आत्मा । त्रिष्टुप्, २ जगती ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि
अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उं ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश
अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि
अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव

# श्रीसूक्तम्

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम्। चन्द्रां हिरण्यमयीं लक्ष्मीं जातवेदो म आवह।।1।। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वँ पुरुषानहम्।।2।। अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्। श्रियं देवीमुपह्वये। श्रीर्मा देवी जुषताम्।।3।। कांसेऽस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्।।4।। चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि।।5।। आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः।।6।। उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे।।7।। क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ।।8।। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।।9।। मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः।।10।। कर्दमेन प्रजा भूता मयि सम्भ्रम कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्।।11।। आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। निचदेवीं मातरं श्रियं वासय मे कुले।।12।। आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह।।13।। आर्द्रां यः करणीं यष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्यमयीं लक्ष्मीं जातवेदो म आवह।।14।। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान्विन्देयं पुरुषानहम्।।15।। यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत्।।16।। इति श्रीसूक्तम्।

लक्ष्मी सूक्त-पद्मानने पद्मऊरू पद्माक्षि पद्मसम्भवे। तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्।।17।। अश्वदायी गोदायी धनदायी महाधने। धनं मे जुषतां देवी सर्वकामांश्च देहि मे।।18।। पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम्। प्रजानां भवती माता आयुष्मन्तं करोतु मे।।19।। धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः। धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्विना।।20।। वैनतेय सोमं पिब सोमं पिबतु वृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः।।21।। न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः। भवन्ति कृत पुण्यानां भक्तानां श्रीसूक्तं जपेत्।।22।। सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे। भगवति हरिबल्लभे मनोज्ञं

त्रिभुवनभूतिकरी प्रसीद मह्यम्।।23।। विष्णुपत्नीं क्षमां देवीं माधवीं माधवाप्रियाम्। विष्णोः प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्।।24।। महालक्ष्मीं च विद्महे विष्णुपत्नीं च धीमहि तन्नो लक्ष्मीः प्रचोदयात्।।25।। पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि। विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं हृदि सन्निधत्स्व।।26।। आनन्दः कर्दमः श्रीदश्चिक्लीत इव विश्रुताः ऋषयः श्रियः पुत्राश्च श्रीर्देवीं देवता श्रियः।।27।। श्रीर्वर्चस्वमायुष्मारोग्यमावि-धात्पवमानं महीयते। धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः।।28।। ऋणरोगादिदारिद्र्यं पापक्षुदपमृत्यवः। भयशोकमनस्तापो नश्यन्तु मम सर्वदा।।29।। इति श्रीलक्ष्मी सूक्तम्।

## गणपत्युपनिषत्

ॐ भद्रं कर्णेभिरिति, स्वस्ति न इति, सह नाववत्विति शान्तिपाठः।। हरिः ॐ।। ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव केवलं सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम् ।।1।। ऋतं वच्मि। सत्यं वच्मि।। 2।। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मा पाहि पाहि समान्तात्।।3।। त्वं वाङ्गमयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि।। 4।। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयिलयमेष्यति सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि वाक्यदानि।। 5।। त्वं गुणत्रयातीतः। त्वं देहत्रयातीतः। त्वं कालत्रयातीतः। त्वं मूलाधारस्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम्।। 6।। गणादिं पूर्वमूच्चार्य वर्णादिं तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्। तारेण रुद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः संधानम्। संहिता सन्धिः। सैषा गणेशविद्या। गणक ऋषिः। निचृद्गायत्री छन्दः। गणपतिदेवता। ॐ ॰ गणपते नमः (इति मन्त्र) ।।7।। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।।8।।

एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्।
अभयं च वरदं हस्तैर्बिभ्राणंमूषकध्वजम्।

रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्।।
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्।
भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्।।
आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्।।
एवं ध्यायति यो नित्यं स योगी योगिनां वरः।। 9।।

नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः।।10।। एतदथर्वशीरो योऽधीते स ब्रह्मभूयाय कल्पते। स सर्वतः सुखमेधते। स सर्वविघ्नैर्न बाध्यते।। स पञ्चमहापापात्प्रमुच्यते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातः प्रयुञ्जानो अपापो भवति। सर्वत्रधीयानोऽपविघ्नो भवति। धर्मार्थकाममोक्षं च विन्दति। इदमथर्वशीर्षमशिष्याय नदेयम्। यो यदि मोहाद्दास्यति। स पापीयान् भवति। सहस्त्रावर्तनात् यं यं काममधीते तं तमनेन साधयेत्।।11।। अनेन गणपतिमभिषिञ्चति स वाग्मी भवति।। चतुर्थ्यामनश्नन् जपति स विद्यावान्भवति।। इत्यथवर्णवाक्यम्। ब्रह्माद्याचरण विद्यात्। न बिभेति कदाचनेति।।12।। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान्भवति। स मेधावान्भवति। यो मोदकसहस्त्रेण यजति स वाञ्छितफलमवाप्नोति। यः साज्यसमिद्भिर्यजति स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमान्निधौ वा जप्त्वा सिद्धमन्त्रो भवति। महाविघ्नात्प्रमुच्यते। महादोषात्प्रमुच्यते। महापापात्प्रमुच्यते। सर्वविद्भवति। य एवं वेद। इत्युपनिषत्।।13।। सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै।। तेजस्विनावधीतमस्तु मा विद्विषावहै। भद्रं कणेभिरिति। स्वस्तिन इन्द्रो. इति शान्ति पाठः।। हरिःॐ।। ॐ शान्तिः शान्तिः शान्तिः।।

।।इति गणेशाथर्वशीर्षगणपत्युपनिषत् समाप्तम्।।

## नारायणोपनिषत्

हरि ॐ ।। ॐ अथपुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात्प्राणो जायते मनः सर्वेन्द्रयाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद् ब्रह्मा जायते। नारायणाद्रुदो जायते। नारायणादिन्द्रो जायते। नारायणत्प्रजापतिः प्रजायते। नारायणाद् द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते। नारायणात्प्रवर्तन्ते।

नारायणे प्रलीयन्ते। एतदृग्वेदशिरोऽधीते।।1।। अथ नित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः शक्रश्च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। विदिशश्च नारायणः। ऊर्ध्वं च नारायणः। अधश्च नारायणः। अन्तर्बहिश्च नारायणः। नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम्। निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति। एतद्यजुर्वेदशिरोऽधीते ।।2।। ओमित्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्मुपरिष्टात् उनोमित्येकाक्षरं नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदम्। यो ह वै नारायणस्याष्टाक्षरं पदमध्येति। अनपब्रुवः सर्वमायुरेति। विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते। ततोऽमृतत्वमश्नुत इति। एतत्सामवेदशिरोऽधीते।।3।।

प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम्। अकार उकारो मकार इति। ता अनेकधा समभवत्तदेतदोमिति। यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्। ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठभुवनं गमिष्यति। तदिदं पुण्डरीकं विज्ञानघनं तस्मात्तडिदाभमात्रम्। ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युत इति। सर्वभूतस्थमेकं वै नारायणं कारणपुरुषकारणं परं ब्रह्मौम्। एतदथर्वशिरोऽधीते। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायमधीयाने दिवसकृतं पाप नाशयति। सायं प्रातरधीयानः पापोऽपापो भवति। मध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते। सर्ववेदपारायणपुण्यं लभते। नारायणसायुज्यमवाप्नोति । श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद।।5।।

।। ॐ सह नाववत्विति शान्तिः।। हरिः ॐ।। ।। इति नारायणोपनिषत्समाप्ता ।।

## गायत्र्यथर्वशीर्षम्

श्री गणेशाय नमः ।। हरि ॐ ।। भद्रं कर्णेभिरिति शान्तिपाठः।

हरिॐ नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयं परिपृच्छति त्वं ब्रूहि भगवन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि।।1।।

ब्रह्मोवाचः।। प्रणवेन व्याहृतयः प्रवर्तन्ते, तमसस्तु परं ज्योतिष्कः पुरुषः स्वयम्। भूर्विष्णूरिति ह ताः स्वाङ्गुल्या मथेत्।।2।। मथ्यमानात्फेनो भवति, फेनाद्बुदबुदो भवति बुद्बुदादण्डं भवति, अण्डवानात्मा भवति, आत्मन आकाशा भवति, आकाशाद्वायुर्भवति, वायोरग्निर्भवति, अग्नेरोङ्कारो भवति,

ॐकाराव्याहृतिर्भवति, व्याहृत्या गायत्री भवति, गायत्र्याः सावित्री भवति, सावित्र्याः सरस्वती भवति, तस्माल्लोकाः प्रवर्तते, चत्वारो वेदाः साङ्गाः सोपनिषदः सेतिहासास्ते सर्वे गायत्र्याः प्रवर्तन्ते यथाऽग्निर्देवानां ब्राह्मणो मनुष्याणं मेरुः शिखरिणां गङ्गा नदीनां वसन्त ऋतूनां ब्रह्मा प्रजापतीनामेवासौ मुख्यो गायत्र्या गायत्री छन्दो भवति।।3। किं भूः किं भुवः किं स्वः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं वरेण्यं कि भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात्।।4।। भूरिति भूर्लोक भुव इत्यन्तरिक्षलोकः। स्वरिति स्वर्लोको मह इति महर्लोको जन इति जनो लोकस्तप इति तपोलोकः सत्यमिति सत्यलोकः। भूर्भुवःस्वरोमिति त्रैलोक्यम्।।5।। तदसौ तेजो यत्तेजसोऽग्निर्देवता सवितुरित्यादित्यस्य वरेण्यमित्यन्नम्। अन्नमेव प्रजापतिर्भर्ग इत्यापः। आपो वै भर्ग एतावत्सर्वा देवता देवस्येन्द्रो वै देवो यद्दिवं तदिंद्रस्तस्मात्सर्वकृत् पुरुषो नाम विष्णुः।।6।। धीमहि किमध्यात्मकं तत्परमं पदमित्यध्यात्मं यो न इति पृथिवी वै यो नः प्रचोदयात् काम इमाँल्लोकान् प्रच्चावयन् यो नृशंस्योऽस्तोष्यस्तत्परमो धर्म इत्येषा गायत्री किंगोत्रा कत्यक्षरा कतिपदा कतिकुक्षिः कतिशीर्षा च।।7।। सांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः सावित्री कक्षास्त्रयः पादा भवन्ति।।8।। काऽस्याः कुक्षि कानि पंच शीर्षाणि। ऋग्वेदोऽस्याः प्रथमः पादो भवति, यजुर्वेदो द्वितीयः सामवेदस्तृतीयः पूर्वा दिक् प्रथमा कुक्षिर्भवति, दक्षिणा द्वितीया, पश्चिमा तृतीया, उदीची चतुर्था, ऊर्ध्वा पञ्चमी अधरा, षष्ठी कुक्षिः। व्याकरणमस्याः प्रथमं शीर्षं भवति, शिक्षा द्वितीयम् कल्पस्तृतीयम्, निरुक्तञ्चतुर्थं, ज्योतिषामयनं पञ्चमम्।।9।। किं लक्षणं किमु चेष्टितं किमुदाहृतं किमक्षरं दैवत्यम्।।10।। लक्षणं मीमांसा अथर्ववेदो विचेष्टितम्। छन्दोविधिरित्युदाहृतम्।11।। को वर्णः कः स्वरः। श्वेतो वर्णः षट्स्वराणि इमान्यक्षराणि दैवतानि भवन्ति। प्रातः पूर्वा भवति, गायत्री मध्यमा, सावित्री पश्चिमा, सन्ध्या सरस्वती।।12।। प्रातः सन्ध्या रक्ता, रक्तपद्मासनस्था रक्ताम्बरधरा रक्तवर्णा रक्तगन्धानुलेपना चतुर्मुखा अष्टभुजा द्विनेत्रा दण्डाक्षमालाकमण्डलुस्त्रुवधारिणी सर्वाभरणभूपिता कौमारी ब्राह्मी हंसवाहिनी ऋग्वेदसंहिता ब्रह्मदैवत्या त्रिपदा गायत्री षट्कुक्षिः पञ्चशीर्षा अग्निमुखा रुद्रशिवविष्णुहृदया ब्रह्मकवचा सांख्ययनसगोत्रा भूर्लोकव्यापिनी अग्निस्तत्त्वम्, उदात्तानुदात्तस्वरितस्वरमकार आत्मज्ञाने विनियोगः। इत्येषा गायत्री ।।13।। मध्याह्नसन्ध्या श्वेता श्वेतपद्मासनस्था श्वेताम्बरधरा श्वेतगन्धानुलेपना पञ्चमुखी दशभुजा त्रिनेत्रा शूलाक्षमाला कमण्डलुकपाल-

धारिणी सर्वाभरणभूषिता सावित्री युवती माहेश्वरी वृषमवाहिनी यजुर्वेदसंहिता रुद्रदैवत्या, त्रिपदा सावित्री षट्कुक्षि पञ्चशीर्षा अग्निमुखा रुद्रशिखा ब्रह्मकवचा भारद्वाजसगोत्रा भुवर्लोकव्यापिनी वायुस्तत्त्वम्, उदात्तानुदात्तस्वरितस्वरमकारः श्वेतवर्ण आत्मज्ञाने विनियोगः। इत्येषा सावित्री।।14।। सायंसन्ध्य कृष्णा कृष्णपद्मासनस्था कृष्णाम्बरधरा कृष्णवर्णा कृष्णगन्धानुलेपना कृष्णमाल्याम्बरधरा एकमुखी चतुर्भुजा द्विनेत्रा शङ्क्षचक्रगदापद्म-धारिणी सर्वाभरणभूषिता सरस्वती वृद्धा वैष्णवी गरुडवाहिनी सामवेदसंहिता विष्णुदैवत्या त्रिपदा षट्कुक्षिः पञ्चशीर्षा अग्निमुखा विष्णुहृदया रुद्रशिखा ब्रह्मकवचा काश्यपसगोत्रा स्वर्लोकव्यापिनी सूर्यस्तत्त्वमुदात्तानुदात्त-स्वरितमकारः कृष्णवर्णो मोक्षज्ञाने विनियोगः। इत्येषा सरस्वती।।15।। रक्ता गायत्री श्वेता सावित्री कृष्णवर्णा सरस्वती। प्रणवो नित्ययुक्तश्च व्याहृतीषु च सप्तसु।।16।। सर्वेषामेव पापानां सङ्करे समुपस्थिते। दश शतं समभ्यर्च्य गायत्री पावनी महत्।।17।। प्रह्लादोऽत्रिर्वसिष्ठश्च शुकः कण्वः पराशरः। विश्वामित्रे महातेजाः कपिलः शौ (सौ) तको महान्।।18।। याज्ञवल्क्यो भरद्वाजो जमदग्निस्तपो निधिः। गौतमो मुद्गलः श्रेष्ठो वेदव्यासश्च लोमशः।।19।। अगस्त्यः कौशिको वत्सः पुलस्त्यो माण्डुकस्तथा। दुर्वासास्तपसा श्रेष्ठो नारदः कश्यपस्तथा।। 20।। उक्तात्युक्ता तथा मध्या प्रतिष्ठान्यासु पूर्विका। गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।। 21।। त्रिष्टुप् च जगती चैव तथातिजगती मता। शक्करी सातिपूर्वा यादष्ट्यत्यष्टी तथैव च। धृतिश्चातिधृतिश्चैव प्रकृतिः कृतिकाकृतिः।।22।। विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः। इत्येतांश्छन्दसां संज्ञाः क्रमशो वच्मि सांप्रतम्।। 23।। भूरिति छन्दो भुव इति छन्दःस्वरितो छन्दो भूभुर्वःस्वरोमिति देवी गायत्री इत्येतानि छन्दांसि प्रथममाग्नेयं द्वितीयं प्रजापत्यं तृतीयं सौम्यं चतुर्थमैशानं पञ्चममादित्यं षष्ठं बार्हस्पत्यं सप्तमं पितृदैवतव्यमष्टमं भगदैवत्यं नवममार्यमं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशमैन्द्राग्नं चतुर्दशं वायव्यं पञ्चदशं वामदैवत्यं षोडशं मैत्रावरुणं सप्तदशमाङ्गिरसमष्टादशं वैश्वदेव्यमेकोनविंशं वैष्णवं विंशं वासवमेकविंशं रौद्रं द्वाविंशमाश्विनं त्रयोविंशं ब्राह्मं चतुर्विंश सावित्रम्।।24।। दीर्घान्स्वरेण संयुक्तान् बिन्दुनादसमन्वितान्। व्यापकान्विन्यसेत्पश्चाद्दशपङ्क्त्यक्षराणि च। द्रवुपुंस इति प्रत्यक्षबीजानि। प्रह्लादिनी प्रभा सत्या विश्वा भद्रा विलासिनी। प्रभावती जया कान्ता शान्ता पद्मा सरस्वती।।25।। विद्रुमस्फटिकाकारं पदमरागसमप्रभम्। इन्द्रनीलमणिप्रख्यं मौक्तिकं कुङ्कुमप्रभम्।।26।। अञ्जनाभं च गाङ्गेयं वैदुर्यं

चन्द्रसन्निभम्। हारिद्रं कृष्णदुग्धामं रविकान्तिसमं भवम्।। 27।। शुकपिच्छसमाकारं क्रमेण परिकल्पयेत्। पृथिव्यापस्तथा तेजो वायुराकाश एव च।।28।। गन्धो रसश्च रूपं च शब्दः स्पर्शत्तथैव च।। 29।। घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं च तथापरम्। उपस्थपायुपादादि पाणिर्वागपि च क्रमात्।। 30।। मनो बुद्धिरहङ्कारमव्यक्त च यथाक्रमम्। सुमुखं संपुटं चैव विततं विस्तृतं तथा। एकमुखं च द्विमुखं त्रिमुखं च चतुर्मुखं।।31।। पञ्चमुखं षण्मुखं चाधोमुखं चैव व्यापकम्। अञ्जलीकं ततः प्रोक्तं मुद्रितं तु त्रयोदशम्।। 32।। शकटं यमपाशं च ग्रथितं संमुखोन्मुखम्। प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो बराहकम्।।33।। सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा। एता मुद्राश्चतुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः।। 34।।ॐ मूर्ध्नि संघाते ब्रह्मा विष्णुर्ललाटे रुद्रो भ्रूमध्ये चक्षुश्चन्द्रादित्यौ कर्णयोः शुक्रबृहस्पती नासिके वायुदैवत्यं प्रभातं दोषा उभे सन्ध्ये मुखमग्निर्जिह्वा सरस्वती ग्रीवा स्वध्यायाः स्तनयोर्वसवो बाह्वोर्मरुतः हृदयं पर्जन्यमाकाशमपरं नाभिरन्तरिक्षं कटिरिन्द्रियाणि जघनं प्राजापत्यं कैलासमलयौ ऊरू विश्वेदेवा जानुभ्यां जान्वोः कुशिकौ जङ्घयोरयनद्वयं सुराः पितरः पादौ पृथिवी वनस्पतिर्गुल्फौ रोमाणि मुहूर्तास्ते विग्रहाः केतुमासा ऋतवः सन्ध्याकालत्रयमाच्छादनं संवत्सरो निमिषः अहोरात्रावादित्यचन्द्रमसौ सहस्त्रपरमां देवीं शमध्यां दशापराम्। सहस्त्रनेत्रीं देवी गायत्रीं शरणमहं प्रपद्ये।।35।। तत्सवितुर्वरदाय नमः तत्प्रातरादित्याय नमः। सायमधीयानो रात्रिकृतं पापं नाशयति।।36।। प्रातरधीयानो रात्रिकृतं पापं नाशयति। तत्सायंप्रातः प्रयुंञ्जानोऽपापो भवति। य इदं गायत्र्यथर्वशीर्ष ब्राह्मणः प्रयतः पठेत्। चत्वारो वेदा अधीता भवन्ति। सर्वेषु तीर्थेषु स्नातो भवति। सर्वेर्देवैर्ज्ञातो भवति। सर्वप्रत्यूहात्पूतो भवति।। 37।। अपेयपानात्पूतो भवति।।38।। अभक्ष्यभक्षणात्पूतो भवति। सुरापानात्पूतो भवति।। 39।। सुवर्णस्तेयात्पूतो भवति। पङ्क्तिभेदनात्पूतो भवति। पतितसंभाषणात्पूतो भवति। अनृतवचनात्पूतो भवति। गुरुतल्पगमनात्पूतो भवति। अगम्यागमनात्पूतो भवति। वृषलीगमनात्पूतो भवति।। 40।। ब्रह्महत्यायाः पूतो भवति। भ्रूणहत्यायाः पूतो भवति। वीरहत्यायाः पूतो भवति। अब्रह्मचारी सुब्रह्मचारी भवतिः।।41।। अनेनाथर्वशीर्षेणाधीतेन क्रतुशतेनेष्टं भवति। षष्टिसहस्त्रं गायत्री जप्त्वा भवति। अष्टौ ब्राह्मणान् ग्राहयेदर्थसिद्धिर्भवति। य इदं गायत्र्यथर्वशीर्षं ब्राह्मणः प्रयतः पठेत्।। स सर्वपापैः प्रमुच्यते ब्रह्मलोके महीयते ब्रह्मलोके महीयते।। 42।। हरिः ॐ।। भद्रं कर्णेभिति शान्तिपाठः।

ॐ शान्तिः शान्तिः शान्तिः।। इति गायत्र्याथर्वशीर्ष सम्पूर्णम्।।

## नेत्रोपनिषत्

श्री गणेशाय नमः ॐ भद्रं कर्णेभिरिति शान्तिपाठः

हरिः ॐ।। अथातश्चाक्षुषीं पठितसिद्धविद्यां चक्षूरोगहरां व्याख्यास्यामो यया चक्षूरोगाः सर्वतो नश्यन्ति चक्षुषो दीप्तिर्भवति। अस्याश्चाक्षुषविद्याया अहिर्बुध्न्य ऋषिः गायत्री छन्दः। सविता देवता। चक्षूरोगनिवृत्तये जपे विनियोगः।।

ॐ चक्षुश्चक्षुश्चक्षुस्तेजः। स्थिरो भवं मां पाहि त्वरितं चक्षूरोगान् शमय शमय मम जातरूपं तेजो दर्शय दर्शय यथाहमन्धो न स्यां तथा कृपया कल्याणं कुरु कुरु।।

मम यानि यानि पूर्वजन्मोपार्जितानि चक्षुः प्रतिरोधकदुष्कृतानि तानि सर्वाणि निर्मूलय निर्मूलय।

ॐ नमश्चक्षुस्तेजोदात्रे दिव्यभास्कराय। ॐ नमः करुणाकराय अमृताय। ॐ नमो भगवते सूर्याय।।

अक्षितेजसे नमः। खेचराय नमः। महते नमः। रजसे नमः। तमसे नमः। असतो मा (मां) सद्गमय। तमसो मा (मां) ज्योतिर्गमय। मृत्योर्मा (र्माम्) अमृतं गमय। उष्णो भगवान्। शुचिरूपः हंसो भगवान्। शुचिरप्रतिरूपः। य इमां चाक्षुष्मतीं विद्यां ब्राह्मणो नित्यमधीते न तस्याक्षिरोगो भवति न तस्य कुलेऽन्धो भवति। अष्टौ ब्राह्मणान् ग्राहयित्वा विद्यासिद्धिर्भवति।।

ॐ विश्वरूपं घृणितं जातवेदसं हिरणमयं ज्योतिरूपं तपन्तं सहस्त्ररश्मिभिः शतधा वर्तमानः। पुरः प्रजातामुदयत्येष सूर्यः। ॐ नमो भगवते आदित्याय अवाग्वादिने स्वाहा।। हरिःॐ।।

ॐ भद्रं कर्णेभिरिति शान्तिपाठः।। ॐ शान्तिः शान्तिः शान्तिः।।

।। इति नेत्रोपनिषत्समाप्ता।।

## देव्यथर्वशीर्षम्

श्रीगणेशाय नमः पूर्णमदः पूर्णमिदमित्यादि शान्ति पाठः

ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति साऽब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यं चाशून्यं च। अहमानन्दानन्दौ। अहं विज्ञानाविज्ञाने। अहं ब्रह्माब्रह्मणी। (द्वे ब्रह्मणी वेदितव्ये।) अहं पंचभूतान्यपञ्चभूतानि। (अहं पंचतन्मात्राणि।) अहमखिलं जगत्।

वेदोऽहमवेदोऽहम्। विद्याहमविद्याहम् अजाहमनजाहम्। अधश्चोर्ध्वं च तिर्यक्चाहम्। अहं रुद्रेभिर्वसुभिश्चरामि। अहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुझणावुभो विभर्मि। अहमिन्द्राग्नी अहमश्विनावुभौ। अहं सोमं त्वष्टारं भगं दधामि। अहं विष्णुमुरुक्रमम्। ब्रह्माणमुत प्रजापतिं दधामि। अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते। अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे। य एवं वेद स देवीं संपदमाप्नोति। ते देवा अब्रुवन्।

नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः।। देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु।। कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कंदमातरम्। सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्। महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि। तन्नो देवी प्रचोदयात्। अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः।। कामो योनिः कमला वज्रपाणिर्गुहा ह सा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमातादिविद्योम्। एषात्मशक्तिः। एषा विश्वमोहिनी पाङ्कुशधनुर्बाण-धरा। एषा श्री महाविद्या। य एवं वेद स शोकं तरति।।15।। नमस्ते भगवति मातरस्मान्पाहि सर्वतः।।16।।

सैषाऽष्टौ वसवः, सैषैकादश रुद्राः, द्वादशादित्याः, सैषा विश्वेदेवाः सोमपा असोमपाश्च, सैषा यातुधाना असुरा रक्षांसि पिशाचयक्षसिद्धाः। सैषा सत्त्वरजस्तमांसि, सैषा ब्रह्मविष्णुरुद्ररूपिणी, सैषा प्रजापतीन्द्रमनवः, सैषा ग्रहनक्षत्रज्योतिः कलाकाष्टादिविश्वरूपिणी, तामहं प्रणौमि नित्यम्। पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम्।।17।। अनन्तां विजयां शुद्धां शरण्यां सर्वदा शिवाम्। वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम्। अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्।।18।। एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः। ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः।।19।। वाङ्मया ब्रह्मभूस्तस्मात् षष्ठं वक्रसमन्वितम्। सूर्यो वामश्रोत्रबिन्दुसंयुक्ताष्टतृतीयकम्। नारायणेन सम्मिश्रो वायुश्चाधारयुक् ततः। विच्चे नवार्णकोऽर्णः महदानन्ददायकः। हृत्पुण्डरीकम-ध्यस्थां प्रातःसूर्यसमप्रभाम्। पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम्।। 21।। त्रिनेत्रां रक्तवसनां भक्तकामदुधां भजे।। 21।। भजामि त्वां महादेवीं महाभयविनाशिनि। महादुर्गप्रशमनीं महाकारुण्यरूपिणीम्।। 22।। यस्याः

स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते अज्ञेया। यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता। यस्या लक्ष्यं नोपलक्ष्यते तस्मादुच्यतेअलक्ष्या। यस्या जननं नोपलक्ष्यते तस्मादुच्यते अजा। एकैव सर्वत्र वर्तते तस्मादुच्यत एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यतेऽज्ञेयाऽनन्ताऽलक्ष्याऽजैका नैकेति।। 23।। मन्त्रणां मातृका देवी शब्दानां ज्ञानरूपिणी। ज्ञानानां चिन्मयातीता (चिन्मयानन्दा) शून्यानां शून्यसाक्षिणी।। यस्याः परतरं नास्ति सेषा दुर्गा प्रकीर्तिता।। 24।। तां दुर्गा दुर्गमां देवीं दुराचारविघातिनीम्। नमामि भवभीतोऽहं संसारार्णवतारिणीम्।। 25।। इदमथर्वशीर्षं योऽर्चां स्थापयति।

शतलक्षं जप्त्वापि नार्चासिद्धिं च विन्दति। शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः। दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते। महादुर्गाणि तरति महादेव्याः प्रसादतः।। 26।। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातः प्रयुञ्जानोऽपापो भवति। निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति। भौमाश्विन्यां महादेवीसन्निधौ जप्त्वा महामृत्युं तरति स महामृत्युं तरति। य एवं वेद। इत्युपनिषत्।। पूर्णमदः पूर्णमित्यादि शान्ति पाठः ।। हरिः ॐ।।

इति देव्यथर्वशीर्ष सम्पूर्णम्।।

# देवी सूक्तम्

श्री गणेशाय नमः
नमश्चण्डिकायै

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।। 1।।
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ।। 2।।
कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः ।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ।। 3।।
दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ।। 4।।
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ।। 5।।

या देवी सर्वभूतेषु विष्णुमायेति शब्दिता
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 6।।
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 7।।
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 8।।
या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 9।।
या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 10।।
या देवी सर्वभूतेषु छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 11।।
या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 12।।
या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 13।।
या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 14।।
या देवी सर्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 15।।
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 16।।
या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 17।।
या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 18।।
या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 19।।
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 20।।
या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 21।।
या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।

नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 22 ।।
या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 23 ।।
या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 24 ।।
या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 25 ।।
या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 26 ।।
इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमो नमः ।। 27 ।।
चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। 28 ।।
स्तुता सुरैः पूर्वमभीष्टसंश्रया-त्तथा सुरेन्द्रेण दिनेषु सेविता।
करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः।।29।।
या साम्प्रतं चोद्धतदैत्यतापितैरस्माभिरीशा च सुरैर्नमस्यते।
या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदो भक्ति विनम्रमूर्तिभिः।।30।।

इति मार्कण्डेय पुराणान्तर्गततन्त्रोक्तम् देवीसूक्तम्।।

## अन्नपूर्णास्तोत्रम्

अथध्यानम्-

सिन्दूरा-रुण-विग्रहां त्रिनयनां माणिक्य-मौलिस्फुरत्
तारानायक-शेखरां स्मितमुखीमापीन-वक्षोरुहाम्।
पाणिभ्यामलिपूर्ण-रत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थ-रक्तचरणां ध्यायेत् परामम्बिकाम्।
नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिल-घोरपावनकरी प्रत्यक्षमाहेश्वरी।
प्रालेयाचल-वंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ।।1।।

नानारत्न-विचित्र-भूषणकरी हेमाम्बराडम्बरी
मुक्ताहार-विलम्बमान-विलसद्वक्षोज-कुम्भान्तरी।
काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी,
भीक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ।।2।।

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्रार्कानल-मासमानलहरी त्रैलोक्यरक्षाकरी।
सर्वैश्वर्य-समस्तवाञ्छितकरी काशीपुराधीश्वरी
भिक्षां देहि कृपाव लम्बनकरी माताऽन्नपूर्णेश्वरी ।।3।।

कैलासाचल-कन्दरालयकरी गौरी उमा शङ्करी,
कौमारी निगमार्थगोचरकरी ह्योङ्कारबीजाक्षरी।
मोक्षद्वार-कपाट-पाटनकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ।।4।।

दृश्यादृश्य-प्रभूतवाहनकरी ब्रह्माण्डभाण्डोदरी,
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।5।।

उर्वी सर्वजनेश्वरी भगवती माताऽन्नपूर्णेश्वरी,
वेणीनील-समान-कुन्तलहरी नित्यान्नदानेश्वरी।
सर्वानन्दकरी दशाशुभकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।6।।

आदिक्षान्त-समस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरात्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।7।।

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी,
वामं स्वादु-पयोधर-प्रियकरी सौभाग्यमाहेश्वरी।
भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।8।।

चन्द्रार्काऽनल-कोटिकोटिसदृशी चन्द्रांशुबिम्बाधरी,
चन्द्रार्काग्नि-समान-कुन्तलहरी चन्द्रार्कवर्णेश्वरी।
माला-पुस्तक-पाश-साङ्कुशधरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।9।।

क्षत्रत्राणकरी महाभयकरी माता कृपासागरी,
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरी श्रीधरी।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी,

भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी।।
अन्नपूर्णे सदा पूर्णे सङ्करप्रणवल्लभे !।
ज्ञान-वैराग्य-सिद्ध्यर्थं भिक्षां देहि च पार्वति।।1।।
माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवाभक्ताश्च स्वदेशो भुवनत्रयम्।।

इति श्रीमच्छङ्कराचार्यविरचितम् अन्नपूर्णास्तोत्रं सम्पूर्णम्।

## अच्युताष्टकम्

अच्युतं केशवं रामनारायणं, कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं, जानकीनायकं रामचन्द्रं भजे ।।1।।
अच्युतं केशवं सत्यभामाधवं, माधवं श्रीधरं राधिकाराधितम् ।
इन्दिरामन्दिरं चेतसा सुन्दरं, देवकीनन्दनं नन्दजं सन्दधे ।।2।।
विष्णवे जिष्णवे शङ्खिने चक्रिणे, रुक्मिणीरागिणे जानकीजानये ।
वल्लवीवल्लभायार्चितायात्मने, कंसविध्वंसिने वंशिने ते नमः ।।3।।
कृष्ण गोविन्द हे राम नारायण, श्रीपते वासुदेवाजित श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज, द्वारकानायक द्रोपदीरक्षक ।।4।।
राक्षसक्षोभितः सीतयाशोभितो, दण्डकारण्यभूपुण्यताकारणः ।
लक्ष्मणेनान्वितो वानरैः सेवितोऽ-गस्त्यसम्पूजितो राघवः पातु माम् ।।5।।
धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां, केशिहा कंसहृद्वंशिकावादकः ।
पूतनाकोपकः सूरजाखेलनो, बालगोपालकः पातु मां सर्वदा ।।6।।
विद्युदुद्योतवत्प्रस्फुरद्वाससं, प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थलं, लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ।।7।।
कुञ्चितैः कुन्तलैर्भ्राजमानाननं, रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कणप्रोज्ज्वलं, किङ्किणीमञ्जुलं श्यामलं तं भजे ।।8।।
अच्युतस्याष्टकं यः पठेदिष्टदं, प्रेमतः प्रत्यहं पूरुषः सस्पृहम् ।
वृत्ततः सुन्दरं कर्तृविश्वम्भरं, तस्य वश्यो हरिर्जायते सत्वरम् ।।9।।

श्रीमदाद्यशङ्कराचार्यविरचितम्

## आदित्यहृदयस्तोत्रम्

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ।।1।।
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्रामगस्त्यो भगवाँस्तदा ।।2।।

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स! समरे विजयिष्यसे ।।3।।
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यमक्षयं परमं शिवम् ।।4।।
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ।।5।।
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ।।6।।
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणाँल्लोकान् पाति गभस्तिभिः ।।7।।
एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमः सोमो ह्यपां पतिः ।।8।।
पितरो वसवः साध्या अश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाः प्राणा ऋतुकर्ता प्रभाकरः ।।9।।
आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुः स्वर्णरेता दिवाकरः ।।10।।
हरिदश्वः सहस्त्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्डकोंऽशुमान् ।।11।।
हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः ।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ।।12।।
व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः ।
घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ।।13।।
आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ।।14।।
नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ।।15।।
नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ।।16।।
जयाय जयभद्राय हर्यश्वायनमो नमः ।
नमो नमः सहस्त्रांशो आदित्याय नमो नमः ।।17।।
नमः उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते ।।18।।
ब्रह्मेशानाच्युतेशाय सूर्यादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ।।19।।

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ।।20।।
तप्तचामीकराभाय हरये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ।।21।।
नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ।।22।।
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ।।23।।
देवाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ।।24।।
एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ।।25।।
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ।।26।।
अस्मिन् क्षणे महाबाहो! रावणं त्वं हनिष्यसि ।
एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् ।।27।।
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ।।28।।
आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ।।29।।
रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपागमत् ।
सर्वयत्नेन महता वृतस्तस्य वधेऽभवत् ।।30।।
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति।।31।।

इत्यार्षे बाल्मीकीये रामायणे आदित्यहृदयस्तोत्रं सम्पूर्णम्।

## श्रीरुद्राष्टकम्

नमामीशमीशान - निर्वाणरूपं, विभुं व्यापकं ब्रह्मवेदस्वरूपम्।
अजं निर्गुणं निर्विकल्पं निरीहं, चिदाकाशमाकाशवासं भजेऽहम् ।।1।।
निराकारमोङ्कारमूलं तुरीयं, गिरा-ग्यान-गोतीतमीशं गिरीशम् ।
करालं महाकाल-कालं कृपालं, गुणागार-संसारपारं नतोऽहम् ।।2।।
तुषाराद्रि-सङ्काश-गौरं गभीरं, मनोभूत-कोटि-प्रभा-श्री-शरीरम् ।
स्फुरन्मौलि कल्लोलिनी चारु गङ्गा, लसद्भाल-बालेन्दु कण्ठे भुजङ्गा।।3।।

चलत्कुण्डलं भ्रू सुनेत्रं विशालं, प्रसन्नाननं नीलकण्ठं दयालुम्।
मृगाधीशचर्माम्बरं मुण्डमालं, प्रियं शङ्करं सर्वनाथं भजामि।।4।।
प्रचण्डं प्रकृष्टं प्रगल्भं परेशं, अखण्डं अजं भानुकोटिप्रकाशम्।
त्रयः शूल-निर्मूलनं शूलपाणिं, भजेऽहं भवानीपतिं भावगम्यम्।।5।।
कलातीत-कल्याण-कल्पान्तकारी, सदा सज्जनानन्ददाता पुरारी।
चिदानन्द-सन्दोह-मोहापहारी, प्रसीद प्रसीद प्रभो मन्मथारी।।6।।
न यावद् उमानाथ पादारविन्दं, भजन्तीह लोके परे वा नराणाम्।
न तावत्सुखं शान्ति सन्तापनाशं, प्रसीद प्रभो सर्वभूताधिवासम्।।7।।
न जानामि योगं जपं नैव पूजां, नतोऽहं सदा सर्वदा शम्भु तुभ्यम्।
जराजन्मदुःखौघतातप्यमानम्, प्रभो ! पाहि आपन्नमामीश शम्भो!।।8।।
रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतोषये।
ये पठन्ति नरा भक्त्या तेषां शम्भुः प्रसीदति।।9।।

इति श्रीमद्गोस्वामितुलसीदासकृतं श्रीरुद्राष्टकं सम्पूर्णम्।

## शिवपञ्चाक्षरस्तोत्रम्

श्रीगणेशाय नमः

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै नकाराय नमः शिवाय ।।1।।
मन्दाकिनीसलिलचन्दनचर्चिताय नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै मकाराय नमः शिवाय ।।2।।
शिवाय गौरीवदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ।।3।।
वसिष्ठकुम्भोद्भवगौतमार्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ।।4।।
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै यकाराय नमः शिवाय ।।5।।
पञ्चाक्षरमिदं स्तोत्रं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ।।6।।

इति श्रीमच्छङ्कराचार्यविरचितं शिवपञ्चाक्षरस्तोत्रं सम्पूर्णम्।

# कालभैरवाष्टकम्

श्रीगणेशाय नमः

देवराज-सेव्यमान-पावनाङ्घ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम्।
नारदादि-योगिवृन्द-वन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ।।1।।
भानुकोटि-भास्वरं भवाब्धितारकं परं
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम्।
कालकालमम्बुजाक्षमक्षशूलमक्षरं
काशिकापुराधिनाथकालभैरवं भजे ।।2।।
शूलटङ्कपाशदण्डपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम्।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं
काशिकापुराधिनाथकालभैरवं भजे ।।3।।
भुक्ति-मुक्तिदायकं प्रशस्तचारुविग्रहं
भक्तवत्सलं स्थितं समस्तलोकविग्रहम्।
विनिक्वणन्-मनोज्ञ-हेमकिङ्किणी-लसत्कटिं
काशिकापुराधिनाथकालभैरवं भजे ।।4।।
धर्मसेतुपालकं स्वधर्ममार्गनाशकं
कर्मपाशमोचकं सुशर्मदायकं विभुम्।
स्वर्णवर्णशेषपाश-शोभिताङ्ग-मण्डलम्
काशिकापुराधिनाथकालभैरवं भजे ।।5।।
रत्नपादुका-प्रभाभिराम-पादयुग्मकं
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम्।
मृत्युदर्पनाशनं करालद्रष्टमोक्षणं
काशिकापुराधिनाथकालभैरवं भजे ।।6।।
अट्टहास-भिन्नपद्मजाण्डकोशसन्ततिं
दृष्टिपात-नष्टपाप-जालमुग्रशासनम्।
अष्टसिद्धिदायकं कपालमालिकन्धरं
काशिकापुराधिनाथकालभैरवं भजे ।।7।।
भूतसङ्घनायकं विशालकीर्तिदायकं

काशिवास-लोकपुण्य-पापशोधकं विभुम्।
नीतिमार्गकोविदं पुरातनं जगत्पतिं
काशिकापुराधिनाथकालभैरवं भजे ।।8।।
कालभैरवाष्टकं पठन्ति ये मनोहरं
ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम्।
शोक-मोह-दैन्यलोभ-कोपताप-नाशनम्
प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं नरा ध्रुवम्।।9।।

इति श्रीमच्छङ्कराचार्यविरचितं कालभैरवाष्टकं सम्पूर्णम्।

## रामरक्षास्तोत्रम्

ध्यान- ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम्।
वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं
नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम्।।

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ।।1।।
ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् ।
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ।।2।।
सासितूणधनुर्बाणपाणिं नक्तञ्चरान्तकम् ।
स्वलीलया जगत्रातुमाविर्भूतमजं विभुम् ।।3।।
रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् ।
शिरो में राघवः पातु भालं दशरथात्मजः ।।4।।
कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती ।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ।।5।।
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः ।
स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ।।6।।
करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ।
मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः ।।7।।
सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः ।
उरू रघुत्तमः पातु रक्षःकुलविनाशकृत् ।।8।।
जानुनी सेतुकृत्पातु जङ्घे दशमुखान्तकः ।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः ।।9।।

एतां रामबलोपेतां रक्षां यः सुकृती पठेत् ।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ।।10।।
पातालभूतलव्योमचारिणश्छद्मचारिणः ।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ।।11।।
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ।।12।।
जगज्जैत्रैकमन्त्रेण रामनाम्नाऽभिरक्षितम् ।
यः कण्ठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ।।13।।
वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमङ्गलम् ।।14।।
आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः ।
तथालिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ।।15।।
आरामः कल्पवृक्षाणां विरामः सकलापदाम् ।
अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ।।16।।
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ।।17।।
फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्येतौ भ्रातरौ रामलक्ष्मणौ ।।18।।
शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।
रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ ।।19।।
आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषङ्गसङ्गिनौ ।
रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम्।। 20।।
सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छ मनोरथान्नश्च रामः पातु सलक्ष्मणः ।।21।।
रामो दाशरथिः शूरो लक्ष्मणानुचरो बली ।
काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः ।।22।।
वेदान्तवेद्यो यज्ञेशः पुराणपुरुषोत्तमः ।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ।।23।।
इत्येतानि जपन्नित्यं मद्भक्तः श्रद्धयान्वितः ।
अश्वमेधाधिकं पुण्यं सम्प्राप्नोति न संशयः ।।24।।
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो नराः ।।25।।

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम्।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तिमूर्तिं
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्।।26।।
रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः।।27।।

श्रीराम राम रघुनन्दन राम राम श्रीराम राम भरताग्रज राम राम।
श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम।।28।।
श्रीरामचन्द्रचरणौ मनसा स्मरामि श्रीरामचन्द्रचरणौ वचसा गृणामि।
श्रीरामचन्द्रचरणौ शिरसा नमामि श्रीरामचन्द्रचरणौ शरणं प्रपद्ये।।29।।
माता रामो मत्पिता रामचन्द्रः स्वामी रामो मत्सखा रामचन्द्रः।
सर्वस्वं मे रामचन्द्रो दयालुर्नान्यं जाने नैव जाने न जाने।।30।।

दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम्।।31।।
लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम्।
कारुण्यरुपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये।।32।।
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये।।33।।
कूजन्तं रामरामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्।।34।।
आपदामपहर्तारं दातारं सर्वसम्पदाम्।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।।35।।
भर्जनं भवबीजानांमर्जनं सुखसम्पदाम्।
तर्जनं यमदूतानां रामरामेति गर्जनम्।।36।।
रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर।।37।।
राम रामेति रामेति रमे रामे मनोरमे।
सहस्त्रनाम तत्तुल्यं रामनाम वरानने!।।38।।

इति श्रीबुधकौशिकमुनिविरचितं श्रीरामरक्षास्तोत्रं सम्पूर्णम्।

# मधुराष्टकम्

श्रीगणेशाय नमः

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ।।। 1 ।।

वचनं मधुर चरितं मधुरं वसनं मधरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 2 ।।

वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 3 ।।

गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 4 ।।

करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 5 ।।

गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 6 ।।

गोपी मधुरा लीला मधुरा युक्तं मधुरं भुक्तं मधुरम्।
दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 7 ।।

गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ।। 8 ।।

इति श्रीवल्लभाचार्यविरचितं मधुराष्टकं सम्पूर्णम्।

## पारिभाषिक-शब्दावलिः

**अङ्गन्यास-** शरीर के प्रत्येक अवयव का स्पर्श।

**अग्निकोण-** पूर्व और दक्षिण का कोण।

**अग्न्युत्तारण -** प्रतिमा को अग्नि से स्पर्श कराना।

**अजिन -** मृगचर्म से निर्मित यज्ञोपवीत।

**अनुलोम-** सीधा क्रम। वर्णानुसार निम्न वर्ण की कन्या से सम्पन्न विवाह अनुलोम होता है।

**अपमृत्यु-** अकालमृत्यु।

**अपसव्य -** दाहिने कन्धे पर जनेऊ/उत्तरीय को धारण करना।

**अमन्त्रक-** बिना मंत्र पढ़े हीं।

**अवनेजन-** पिण्डदान के पूर्व कुश पर दिया जाने वाला संकल्पित तिल सहित जल।

**अरथी-** मृतक के शव को शमशान ले जाने के लिए बाँस की विशेष शायिका।

**अश्मारोहण-** पत्थर पर पैर रखना।

**आज्यभाग-** घृत का हिस्सा (हवनीय घी)।

**ईशान कोण-** पूर्व और उत्तर दिशा का कोण।

**उत्तरीय-** गमछा (दुपट्टा) या शरीर के ऊपरी भाग में धारण किया वस्त्र।

**उद कुम्भदान-** जल कुम्भ का दान।

**उपयमन-** सात कुशाओं को बाँधकर बनाया गया कुश समूह 'जो यज्ञीय कार्य में प्रयुक्त किया जाता है।'

**उपस्थान-** विशेष मुद्रा में प्रणाम (दोनों हाथो से)।

**ऊर्णसूत्र-** ऊन का धागा।

**ऋत्विक्-** यज्ञ में सहायक ब्राह्मण।

**ऋष्यादिन्यास-** ऋषियों के स्मरण के साथ शरीर के प्रत्येक अंग का स्पर्श।

**एकादशाह-** मृत्यु से ग्यारहवें दिन किये जाने वाला श्राद्ध कर्म। इस दिन होने वाले पिण्डदान को उत्तम षोडशी भी कहते हैं।

**कपाल-क्रिया-** अर्ध दग्ध शव के कपाल का भेदन।

**करन्यास-** हाथ की अङ्गुलियों में देवशक्तियों का न्यास।

**कर्मपात्र-** वह विशेष जलपात्र जिसमें पिण्डदान आदि करने के लिए संस्कारित जल का संग्रह करते हैं।

**करोद्वर्तन-** देवार्चन में विशेष मुद्रा से चन्दन का दान।

**क्रव्याद-** अन्त्येष्टि क्रिया से जुड़ी अग्नि विशेष।

**काग ग्रास-** कौओं को दी जाने वाली बलि अर्थात् काग वलि।

**कार्पास सूत्र-** कपास (रुई) से बना धागा।

**कौपीन-** लंगोटी (बिना सिलाई के)।

**गोग्रास-** गो को दी जाने वाली बलि।

**गोदान-** गाय या गाय के कल्पित मूल्यका दान।

**चरु-** हवनीय सामग्री।

**चितानल-** शवदाह करने की अग्नि।

**चिन्मय-** चैतन्य।

**छाया पात्र-** घी अथवा तेल युक्त पात्र, जिसमें अपना प्रतिबिम्व देखा जाता है।

**तर्पण-** जल से सूक्ष्म योनियों को तृप्त करने के लिए दिया जाने वाला जल।

**दशगात्र-** वह क्रिया जो दश-दिन बक मृतात्मा के कल्पित सूक्ष्म शरीर के अंगों को दस भागों में निर्माण के लिए सम्पादित की जाती है।

**नवग्रह समिधा-** अर्क, पलाश, खैर, अपामार्ग, गूलर, पीपल, शमी, कुश, दूब की लकड़ी।

**निवीती-** जनेऊ को माला की भाँति गले में धारण करना।

**निष्क्रयभूत-** प्रतीकात्मक दान।

**नीवी -** कमर में बाँधी जाने वाली कुश ग्रन्थि।

**नैऋत्य कोण-** दक्षिण और पश्चिम दिशा का कोण।

**न्यास-** अपने शरीर के अंगो का विभिन्न मंत्रों से अभिमंत्रित करना तथा तद्-तद् देवताओं का विभिन्न अंगों में स्थापन।

**पञ्चपल्व-** पीपल, गूलर, पाकड़, बरगद और आम्र के पल्ल को पञ्चपल्ल व कहा जाता है।

**पञ्चगव्य-** गाय का गोबर, गोमूत्र, गोघृत, गोदुग्ध, गोदधि।

**पञ्चमेवा-** दाख, छुहाड़ा, बादाम, नारियल, और अखरोट।

**पञ्चभूसंस्कार-** हवन कुण्ड या हवन के वेदिका को जल और गोबर से की जानेवाली शुद्धि।

**पञ्चामृत-** गोदुग्ध, गोघृत, गोदधि, मधु, शर्करा के समूह को पंचामृत कहते हैं।

**पञ्चरत्न-** सोना, चाँदी, मोती, लाजावर्त और मूंगा के समूह को पञ्चरत्न कहते हैं।

**पवित्री-** कुश से निर्मित अनामिका में धारण की जाने वाली पैंती। इसे सामान्यत: तीन कुशाओं के आगे गांठ लगा कर बनाते हैं।

**पर्युरक्षण-** किसी मण्डल को चारों तरफ से (छिड़ककर) घेरकर अभिमंत्रित करने की प्रक्रिया।

**परिसमूहन-** कुशाओं का इकट्ठा करना।

**प्रणीता-** काष्ठ से बना एक विशेष प्रकार का जल पूरित यज्ञ पात्र।

**प्रतिलोम-** विपरीत क्रम।

**प्रमातामह-** परनाना।

**प्रमातामही-** परनानी।

**परिस्तरण-** कुशाओं का यज्ञ वेदिका के चारों तरफ मंत्रों से स्थापित करना।

**प्रादेश मात्र-** एक वित्ता (लगभग 6-7 इंच)।

**पितृतीर्थ-** अंगूठे और तर्जनी की मध्य भाग।

**पूर्णा-** शिलान्यास में पांच देवियों का प्रतीक में एक, जिसमें नन्दा, भद्रा, जया, रिक्ता तथा पूर्णा का पांच शिलाओं अथवा इटों में आवाहन कर उनकी स्थापना की जाती है।

**प्रोक्षणीपात्र-** लकड़ी अथवा मिट्टी का जलपूरीत यज्ञीयपात्र, जिससे अभिमंत्रित जल छिड़का जाता है।

**बटुक-** 10 वर्ष की अवस्था तक के ब्रह्मचारी को बटुक कहते हैं।

**बहिरग्नि-** बाहर की अग्नि।

**ब्रह्मा-** हवनीय यज्ञ की व्यवस्था का पर्यवेक्षण करने वाला।

**भुग्न-** खण्डित अग्रभाग वाला कुश।

**मधुपर्क-** कांसे के पात्र में मधु, घी, दही का मिश्रण।

**मधुमय-** घी, दूध, और मधु से मिश्रित पदार्थ को मधुमय कहतें हैं।

**मलिन षोडशी-** मृत्यु से लेकर दस दिन तक चलने वाली पवित्र होने तक 16 पिण्डदान क्रिया को मलिनषोडशी कहते हैं।

**मातामह-** नाना।

**मातामही-** नानी।

**मोटक-** कुश का दो गुणा भुग्न भाग।

**मौञ्जी-** भूज से बनी करधनी।

**यज्ञोपवीत-** यज्ञ का उपवीत (व्रतबन्ध) अर्थात् जनेऊ। यज्ञ यहां व्यापक अर्थ में प्रयुक्त है।

**वायव्यकोण-** उत्तर और पश्चिम दिशा का कोण।

**विकिरपिण्ड-** कुल में अग्नि से जिसका संस्कार नही किया गया है। ऐसे पितरों को दिया जाने वाला पिण्ड।

**वृषोत्सर्ग-** विशेष प्रकार का सांड़ छोड़ने का कर्मकाण्डीय विधान।

**ब्राह्मतीर्थ-** अगूठे का मूल भाग।

**ब्राह्ममुहूर्त-** सूर्योदय से चार घड़ी (डेढ़ घण्टे से अधिक) पूर्व का समय।

**विष्टर-** आसन विशेष प्रकार के कुश से बना प्रतीक आसन।

**लाजाहुती-** धान के लावे का हवन।

**श्वान ग्रास-** कुत्ते को दी जाने वाली बलि।

**सप्तघृत मातृका-**घृत से बनाई गई सात रेखायें जिनपर सात देवियों का आवाहन-पूजन किया जाता है।

**सप्तधान्य-** जौ, धान, तिल, कंगनी, मूग, चना और सावाँ।

**सप्तमृद्-** घुड़साल, हाथी साल, बॉवी, नदियों का संगम, तालाब, राजद्वार और गोशाला इन सात स्थानों की मिट्टी को सप्तमृद् कहते हैं।

**संमार्जन-** जल से पवित्र करना।

**समिधा-** हवन के लिए प्रयुक्त की जाने वाली यज्ञीय लकड़ी।

**सव्यभाव-** बाये कन्धे पर (जनेऊ को धारण करना सव्यभाव है)।

**सर्वौषधि-** कूठ, (जटामासी) मुरा, चन्दन, वच, कपूर, मुस्ता, दारु हल्दी।

**स्त्रुवा-** यज्ञीय काष्ठ से बना हवन करने का पात्र जिससे घी टपकाया जाता है।

**स्विष्टकृद्होम-** पूर्णाहुति से अवशिष्ट, पूर्णता के लिए दी गई आहुति।

**स्थण्डिल-** हवन वेदी की भूमि।

**स्थालीपाक-** हवन करने के लिये विशेष रूप के यज्ञ पात्र में पकाया गया अन्न।

**त्रिकाष्ठ -** तीन लकड़ी से बना मृतक घट (घंट) को रखने हेतु।

**होता-** हवन करने वाला।

# उत्तर-प्रदेश-संस्कृत-संस्थानम् के प्रमुख प्रकाशन

| क्र. | पुस्तक का नाम | लेखक/सम्पादक | मूल्य |
|---|---|---|---|
| 1. | संस्कृत वाङ्मय का वृहद् इतिहास | प्रधान सम्पादक | |
| | (अट्ठारह खण्ड) | पद्मभूषण आचार्य श्री बलदेव उपाध्याय | |
| | वेद खण्ड (प्रथम) | सम्पादक प्रो. व्रजविहारी चौबे | 320.00 |
| | वेदाङ्ग खण्ड (द्वितीय) | सम्पादक प्रो. ओमप्रकाश पाण्डेय | 300.00 |
| | आर्पकाव्य खण्ड (तृतीय) | सम्पादक प्रो. भोलाशंकर व्यास | 400.00 |
| | काव्य खण्ड (चतुर्थ) | सम्पादक प्रो. राधावल्लभ त्रिपाठी | 300.00 |
| | आधुनिक संस्कृत साहित्य का इतिहास (सप्तम्) | सम्पादक प्रो. जगन्नाथ पाठक | 300.00 |
| | न्याय खण्ड (नवम्) | सम्पादक प्रो. गजानन शास्त्री मुसलगांवकर | 280.00 |
| | वेदान्त खण्ड (दशम) | सम्पादक प्रो. संगम लाल पाण्डेय | 300.00 |
| | तन्त्रागम खण्ड (एकादश) | सम्पादक प्रो. व्रजवल्लभ द्विवेदी | 300.00 |
| 2. | सरल संस्कृतम् | श्री प्रयाग दत्त चतुर्वेदी | 30.00 |
| 3. | स्तुतिमणि माला | संपादक आचार्य करूणापति त्रिपाठी | 20.00 |
| 4. | दावानल | डॉ. श्रीनाथ हसूरकर | 113.00 |
| 5. | मदीयात्मकथा | सम्पादक आचार्य करूणापति त्रिपाठी | 125.00 |
| 6. | संस्कृत प्रभा | डॉ. कपिलदेव द्विवेदी | 70.00 |
| 7. | पाणिनि तथा संस्कृत के अन्य-अल्पज्ञात कवियों की रचनायें | डॉ. प्रभात शास्त्री | 86.00 |
| 8. | संक्षिप्त महाभारत (द्वितीय खण्ड) | संपादक एवं अनुवादक डॉ. प्रभुनाथ द्विवेदी | 225.00 |
| 9. | कालिदास-ग्रन्थावली | सम्पादक-आचार्य सीताराम चतुर्वेदी | 200.00 |
| 10. | कविर्जयति-वाल्मीकिः | सम्पादक-डॉ. आनन्द कुमार श्रीवास्तव | 120.00 |
| 11. | परिशीलनम् पाण्मासिकी संस्कृतानुसंधान पत्रिका | | 10.00 |
| 12. | विद्वच्चरित पंचकम | सं.म.म. नारायणशास्त्री खिस्ते | 60.00 |
| 13. | अद्वैत सिद्धिः (प्रथम भाग) | गुरु चन्द्रिका टीका | 100.00 |
| 14. | अद्वैत सिद्धिः (द्वितीय भाग) | गुरु चन्द्रिका टीका | 100.00 |
| 15. | अद्वैत सिद्धिः (तृतीय भाग) | गुरु चन्द्रिका टीका | 80.00 |
| 16. | तन्त्र समुच्चयः (प्रथम भाग)शंकरप्रभृति विमार्शिनी आख्या विवरणाख्या-व्याख्या समेत | | 100.00 |
| 17. | तन्त्र समुच्चयः (द्वितीय भाग) " " " " " | | 100.00 |
| 18. | पंचदशी अच्युतरायमोडक एवं रामकृष्ण-व्याख्या सहित | | 150.00 |
| 19. | सदुक्ति कर्णामृतम् (प्रथम भाग) श्रीधरदास प्रणीतम् एवं म.म. रामावतार शर्मा सम्पादित, हिन्दी टीका-प्रो. ओम् प्रकाश पाण्डेय | | 120.00 |
| 20. | श्रीमद्वाल्मीकि रामायण (प्रथम भाग) श्री गोविन्दराजीय व्याख्या तिलक प्रभृति अनेक पूर्व व्याख्यान उद्धृत गोविन्दराजीय अनुक्त एवं पूर्व विपयों से समलंकृत | | 220.00 |
| 21. | श्रीमद्वाल्मीकि रामायण (द्वितीय भाग) पूर्व विपयों से समलंकृत | | 180.00 |
| 22. | श्रीमद्वाल्मीकि रामायण (तृतीय भाग) पूर्व विपयों से समलंकृत | | 220.00 |
| 23. | श्रीमद्वाल्मीकि रामायण (चतुर्थ भाग) पूर्व विपयों से समलंकृत | | 120.00 |
| 24. | मन्त्ररामायण (हिन्दी टीका) | डॉ. प्रभुनाथ द्विवेदी | 75.00 |
| 25. | धातुरूप-निदर्शनम् | पं. वासुदेव द्विवेदी शास्त्री | 50.00 |
| 26. | नैपधीय-चरितम् (प्रथम भाग) | नारायणी एवं मल्लिनाथ टीका सहित | 125.00 |
| 27. | नैपधीय-चरितम् (द्वितीय भाग) | नारायणी एवं मल्लिनाथ टीका सहित | 115.00 |
| 28. | भारतीय स्वतंत्रता संघर्प गाथा | डॉ. सत्यदेव चौधरी | 40.00 |
| 29. | कथामन्दाकिनी | डॉ. ओम प्रकाश ठाकुर | 60.00 |
| 30. | बालकथा कौमुदी | सम्पादक-डॉ. विश्वास | 50.00 |
| 31. | बाल वाटिका | सम्पादक-डॉ. विश्वास | 30.00 |